ஸ்ரீ:

    

# श्रीदेशिकस्तोत्राणि

## ஸ்ரீ தேசிக ஸ்தோத்ரங்கள்

(சது:ஶ்லோகி, ஸ்தோத்ரரத்நம், கத்யத்ரயம் இவற்றுடன்)

(ஸம்ஸ்க்ருத மூலம்)


பரிசோதகர்

ஸ்ரீ உப. வங்கீபுரம் நவநீதம்

**ஸ்ரீராமதேசிகாசார்ய ஸ்வாமி**

ஒப்பிலியப்பன் ஸந்நிதி


---


பதிப்பகத்தார்

**தி லிட்டில் ப்ளவர் கம்பெனி**

சென்னை-600 017


விலை  ரூ. 16



திருவயிந்திரபுரத்தில் திருக்கோயில் கொண்டு
எழுந்தருளியிருக்கும்

ஸ்ரீமந் நிகமாந்த மஹாதேசிகன்



# श्रीदेशिकस्तोत्राणि

## ஸ்ரீ தேசிக ஸ்தோத்ரங்கள்

(சதுஃச்லோகி, ஸ்தோத்ரரத்நம், கத்யத்ரயம் இவற்றுடன்)

(மூலம் மட்டும்)


பரிசோதகர்

ஸ்ரீ உப. வங்கீபுரம் நவநீதம்

ஸ்ரீராமதேசிகாசார்யர் ஸ்வாமி

ஒப்பிலியப்பன் ஸந்நிதி



பதிப்பகத்தார்

தி லிட்டில் ப்ளவர் கம்பெனி

சென்னை-600017 திருச்சி-620002

விலை  ரூ. 16

முதற் பதிப்பு : 1970

இரண்டாம் பதிப்பு : 1982

மறு அச்சு - 1991

குமுதம் பிரிண்டர்ஸ் பிரைவேட் லிமிடெட், சென்னை-600 007

ஸ்ரீ:
ஸ்ரீமதே நிகமாந்த மஹாதேசிகாய நம:

# முன்னுரை

(முதற் பதிப்பு)

ஸ்ரீதேசிக பக்தர்களே! ஸாத்துவிகப் பெரியோர்களே! மிக்க பணிவுடன் அடியேன் உங்களுக்குச் செய்யும் விண்ணப்பம்.

சில ஆண்டுகட்குமுன் ஸ்ரீதேசிகன் அருளிய எல்லா (28) ஸ்தோத்ரங்களுக்கும் எளிய தமிழில் விரிவுரை இரண்டு பாகமாக வெளியாகிப் புத்தகங்கள் அனைத்தும் மிக விரைவிலேயே செலவாகி விட்டன. அவற்றின் மறுபதிப்பைச் செய்யுமாறு ஆஸ்திகர்கள் நியமித்தனர். எல்லாப் பொருள்களும் நினைக்கமுடியாத அளவுக்கு விலையேறி நிற்கும் இச் சூழ்நிலையில் முன்னிலும் பெருந்தொகைச் செலவில் அதன் மறுபதிப்பு எம்பெருமான் கடாக்ஷத்தால் இப்பொழுது வெளிவந்துள்ளது.

ஆஸ்திகர்கள் பற்பல பயன்களைக் கருதி ஸ்தோத்ரங்களைப் பாராயணம் செய்வது வழக்கமாதலின் அதற்குப் பாங்காக அந்த 28 ஸ்தோத்ரங்களையும் ஆளவந்தார் அருளிய ஸ்ரீசது: சுலோகியையும் ஸ்ரீஸ்தோத்ரரத்நத்தையும் எம்பெருமானுர் அருளிய ஸ்ரீகத்ய த்ரயத்தையும் மூலம் மட்டும் பிழையின்றி வெளியிடும்படி பல பெரியோர்கள் நியமித்தனர். அவர்களின் நியமநத்தை அடியேன் தலைக்கட்ட எம்பெருமான் கடாக்ஷித்தான். இந்த உரைப்பதிப்பு-மூலப்பதிப்பு ஆகிய இரண்டும் ஒரு பிழையும் இல்லாது அமைய வேண்டுமென்று அடியேன் கொண்ட ஸங்கல்பத்துக்கு எம்பெருமான் ஸங்கல்பம் எந்த அளவுக்கு அநுகூலமாயிருந்த தென்பதைக் காணும் பொறுப்பை இந்தக் கிரந்தங்களை ஸேவிப்பவர்களிடமே ஸமர்ப்பித்து விடுகின்றேன்.

★ ★ ★

தேஹத்தில் சக்தியும் உள்ளத்தில் நினைவுத்திறனும் உள்ள வரையில் அடியேனது சிறிய ஞானத்தைப் பயன்படுத்திப் பின்னும் ஸ்ரீதேசிக தர்சநத்துக்கு இத்தகைய தொண்டுகளை அடியேன் புரியும்படி அருளத் திருவிண்ணகரப்பனைப் பிரார்த்திக்குமாறு உங்களைப் பிரார்த்திக்கின்றேன்.

அடியார்க்கடியன்,

**வ. ந. ஸ்ரீராமதேசிகதாஸன்.**

ஸ்ரீ :
ஸ்ரீமதே நிகமாந்த மஹாதேசிகாய நம:

# பொருள் அடக்கம்



ஸ்ரீமதே நிகமாந்தமஹாதேசிகாய நம:



श्रीः
श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमते भगवद्यामुनमुनये नमः
श्रीभगवद्यामुनमुनिभिः अनुगृहीता

# श्रीचतुःश्लोकी

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥
स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् ।
स्तोत्रयामास योगीन्द्रः तं वन्दे यामुनाह्वयम् ॥
यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥
नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥

---

कान्तस्ते पुरुषोत्तमः फणिपतिः शय्याऽऽसनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम् ॥ 1

यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभुः
नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयः
लोकैकेश्वरि लोकनाथदयिते दान्ते दयां ते विदन् ॥ 2

ईषत् त्वत्करुणानिरीक्षणसुधासंधुक्षणाद्रक्ष्यते
नष्टं प्राक् तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ।
श्रेयो न ह्यरविन्दलोचनमनःकान्ताप्रसादादृते
संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित् ॥ 3

शान्तानन्तमहाविभूति परमं यद्ब्रह्म रूपं हरेः
मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तानि
आहुः स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥ 4

श्रीचतुःश्लोकी समाप्ता

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते भगवद्यामुनमुनये नमः
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः
श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमते भगवद्यामुनमुनये नमः
श्रीभगवद्यामुनमुनिभिः अनुगृहीतं

# श्रीस्तोत्ररत्नम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् ।
स्तोत्रयामास योगीन्द्रः तं वन्दे यामुनाह्वयम् ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥

---

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये ।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ 1



तस्मै नमो मधुजिदङ्घ्रिसरोजतत्त्व-
ज्ञानानुरागमहिमातिशयान्तसीम्ने ।
नाथाय नाथमुनयेऽत्र परत्र चापि
नित्यं यदीयचरणौ शरणं मदीयम् ॥ 2

भूयो नमोऽपरिमिताच्युतभक्तितत्त्व-
ज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्ति-
योगाय नाथमुनये यमिनां वराय ॥ 3

तत्त्वेन यश्चिदचिदीश्वरतत्स्वभाव-
भोगापवर्गतदुपायगतीरुदारः ।
संदर्शयन् निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ॥ 4

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत् तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥ 5

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्
अस्मन्मनोरथपथः सकलः समेति ।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्
पादारविन्दमरविन्दविलोचनस्य ॥ 6

तत्त्वेन यस्य महिमार्णवशीकराणुः
शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ 7

यद्वा श्रमावधि यथामति वाऽप्यशक्तः
स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणुकुलाचलयोर्विशेषः ॥ 8

किं वैष शक्त्यतिशयेन न तेऽनुकम्प्यः
स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धेः
इत्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ 9

नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः
स्वामिन् न चित्रमिदमाश्रितवत्सलत्वम् ॥ 10

स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण त्वयि न मृष्यति वैदिकः कः ।
ब्रह्मा शिवः शतमखः परमः स्वराडिति
एतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ 11

कः श्रीः श्रियः परमसत्त्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः ।
कस्यायुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ॥ 12

वेदापहारगुरुपातकदैत्यपीडा-
द्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपती परिपाति कस्य
पादोदकेन स शिवः स्वशिरोधृतेन ॥ 13



कस्योदरे हरविरिञ्चमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन वैष परवानिति शक्यशङ्कः ॥ 14

त्वां शीलरूपचरितैः परमप्रकृष्ट-
सत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः ।
प्रख्यातदैवपरमार्थविदां मतैश्च
नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ 15

उल्लङ्घितत्रिविधसीमसमातिशायि-
संभावनं तव परिव्रढिमस्वभावम् ।
मायाबलेन भवताऽपि निगूह्यमानं
पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥ 16

यदण्डमण्डान्तरगोचरं च यत्
दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परं पदं
परात् परं ब्रह्म च ते विभूतयः ॥ 17

वशी वदान्यो गुणवान् ऋजुः शुचिः
मृदुर्दयालुर्मधुरः स्थिरः समः ।
कृती कृतज्ञस्त्वमसि स्वभावतः
समस्तकल्याणगुणामृतोदधिः ॥ 18

उपर्युपर्यब्जभुवोऽपि पूरुषान्
प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया
सदा स्थिता नोद्यमतोऽतिशेरते ॥ 19

त्वदाश्रितानां जगदुद्भवस्थिति-
प्रणाशसंसारविमोचनादयः ।
भवन्ति लीला विधयश्च वैदिकाः
त्वदीयगम्भीरमनोऽनुसारिणः ॥ 20

नमो नमो वाङ्मनसातिभूमये
नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये
नमो नमोऽनन्तदयैकसिन्धवे ॥ 21

न धर्मनिष्ठोऽस्मि न चात्मवेदी
न भक्तिमान् त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिः शरण्य
त्वत्पादमूलं शरणं प्रपद्ये ॥ 22

न निन्दितं कर्म तदस्ति लोके
सहस्रशो यन्न मया व्यधायि ।
सोऽहं विपाकावसरे मुकुन्द
क्रन्दामि संप्रत्यगतिस्तवाग्रे ॥ 23

निमज्जतोऽनन्त भवार्णवान्तः
चिराय मे कूलमिवासि लब्धः ।
त्वयाऽपि लब्धं भगवन्निदानीं
अनुत्तमं पात्रमिदं दयायाः ॥ 24

अभूतपूर्वं मम भावि किं वा
सर्वं सहे मे सहजं हि दुःखम् ।
किं तु त्वदग्रे शरणागतानां
पराभवो नाथ न तेऽनुरूपः ॥ 25



निरासकस्यापि न तावदुत्सहे
महेश हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुः स्तनंधयः
न जातु मातुश्चरणौ जिहासति ॥ 26

तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरकं हि वीक्षते ॥ 27

त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचित्
यथा तथा वाऽपि सकृत् कृतोऽञ्जलिः ।
तदैव मुष्णात्यशुभान्यशेषतः
शुभानि पुष्णाति न जातु हीयते ॥ 28

उदीर्णसंसारदवाशुशुक्षणिं
क्षणेन निर्वाप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुज-
द्वयानुरागामृतसिन्धुशीकरः ॥ 29

विलासविक्रान्तपरावरालयं
नमस्यदार्तिक्षपणे कृतक्षणम् ।
धनं मदीयं तव पादपङ्कजं
कदा नु साक्षात्करवाणि चक्षुषा ॥ 30

कदा पुनः शङ्खरथाङ्गकल्पक-
ध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ।
त्रिविक्रम त्वच्चरणाम्बुजद्वयं
मदीयमूर्धानमलङ्करिष्यति ॥ 31

विराजमानोज्ज्वलपीतवाससं
स्मितातसीसूनसमामलच्छविम् ।
निमग्ननाभिं तनुमध्यमुन्नतं
विशालवक्षःस्थलशोभिलक्षणम् ॥ 32

चकासतं ज्याकिणकर्कशैः शुभैः
चतुर्भिराजानुविलम्बिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषण-
श्लथालकाबन्धविमर्दशंसिभिः ॥ 33

उदग्रपीनांसविलम्बिकुण्डला-
लकावलीबन्धुरकम्बुकन्धरम् ।
मुखश्रिया न्यक्कृतपूर्णनिर्मला-
मृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥ 34

प्रबुद्धमुग्धाम्बुजचारुलोचनं
सविभ्रमभ्रूलतमुज्ज्वलाधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं
ललाटपर्यन्तविलम्बितालकम् ॥ 35

स्फुरत्किरीटाङ्गदहारकण्ठिका-
मणीन्द्रकाञ्चीगुणनूपुरादिभिः ।
रथाङ्गशङ्खासिगदाधनुर्वरैः
लसत्तुलस्या वनमालयोज्ज्वलम् ॥ 36

चकर्थ यस्या भवनं भुजान्तरं
तव प्रियं धाम यदीयजन्मभूः ।
जगत् समस्तं यदपाङ्गसंश्रयं
यदर्थमम्भोधिरमन्थ्यबन्धि च ॥ 37



स्ववैश्वरूप्येण सदाऽनुभूतयाऽपि
अपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैः
सदा तवैवोचितया तव श्रिया ॥ 38

तया सहासीनमनन्तभोगिनि
प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डल-
प्रकाशमानोदरदिव्यधामनि ॥ 39

निवासशय्यासनपादुकांशुको-
पधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतैः
यथोचितं शेष इतीरिते जनैः ॥ 40

दासः सखा वाहनमासनं ध्वजः
यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता
त्वदङ्घ्रिसंमर्दकिणाङ्कशोभिना ॥ 41

त्वदीयभुक्तोज्झितशेषभोजिना
त्वया निसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना न्यवेदि तत्
तथाऽनुजानन्तमुदारवीक्षणैः ॥ 42

हताखिलक्लेशमलैः स्वभावतः
त्वदानुकूल्यैकरसैस्तवोचितैः ।
गृहीततत्तत्परिचारसाधनैः
निषेव्यमाणं सचिवैर्यथोचितम् ॥ 43

अपूर्वनानारसभावनिर्भर-
प्रबुद्धया मुग्धविदग्धलीलया ।
क्षणाणुवत् क्षिप्तपरादिकालया
प्रहर्षयन्तं महिषीं महाभुजम् ॥

अचिन्त्यदिव्याद्भुतनित्ययौवन-
स्वभावलावण्यमयामृतोदधिम् ।
श्रियः श्रियं भक्तजनैकजीवितं
समर्थमापत्सखमर्थिकल्पकम् ॥

भवन्तमेवानुचरन् निरन्तरं
प्रशान्तनिःशेषमनोरथान्तरः ।
कदाऽहमैकान्तिकनित्यकिङ्करः
प्रहर्षयिष्यामि सनाथजीवितः ॥

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष योऽहं योगिवर्याग्रगण्यैः ।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ॥

अपराधसहस्रभाजनं
पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे
कृपया केवलमात्मसात् कुरु ॥

अविवेकघनान्धदिङ्मुखे
बहुधा सन्ततदुःखवर्षिणि ।
भगवन् भवदुर्दिने पथः
स्खलितं मामवलोकयाच्युत ॥



न मृषा परमार्थमेव मे
शृणु विज्ञापनमेकमग्रतः ।
यदि मे न दयिष्यसे ततः
दयनीयस्तव नाथ दुर्लभः ॥ 50

तदहं त्वदृते न नाथवान्
मदृते त्वं दयनीयवान् न च ।
विधिनिर्मितमेतमन्वयं
भगवन् पालय मा स्म जीहपः ॥ 51

वपुरादिषु योऽपि कोऽपि वा
गुणतोऽसानि यथा तथाविधः ।
तदयं तव पादपद्मयोः
अहमद्यैव मया समर्पितः ॥ 52

मम नाथ यदस्ति योऽस्म्यहं
सकलं तद्धि तवैव माधव ।
नियतस्वमिति प्रबुद्धधीः
अथवा किं नु समर्पयामि ते ॥ 53

अवबोधितवानिमां यथा
मयि नित्यां भवदीयतां स्वयम् ।
कृपयैवमनन्यभोग्यतां
भगवन् भक्तिमपि प्रयच्छ मे ॥ 54

तव दास्यसुखैकसङ्गिनां
भवनेष्वस्त्वपि कीटजन्म मे ।
इतरावसथेषु मास्म भूत्
अपि मे जन्म चतुर्मुखात्मना ॥ 55

सकृत् त्वदाकारविलोकनाशया
तृणीकृतानुत्तमभुक्तिमुक्तिभिः ।
महात्मभिर्मामवलोक्यतां नय
क्षणेऽपि ते यद्विरहोऽतिदुःसहः ॥ 56

न देहं न प्राणान् न च सुखमशेषाभिलषितं
न चात्मानं नान्यत् किमपि तव शेषत्वविभवात् ।
बहिर्भूतं नाथ क्षणमपि सहे यातु शतधा
विनाशं तत् सत्यं मधुमथन विज्ञापनमिदम् ॥ 57

दुरन्तस्यानादेरपरिहरणीयस्य महतः
निहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि ।
दयासिन्धो बन्धो निरवधिकवात्सल्यजलधे
तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः ॥ 58

अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-
स्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम् ।
तथाऽपीत्थंरूपं वचनमवलम्ब्यापि कृपया
त्वमेवैवंभूतं धरणिधर मे शिक्षय मनः ॥ 59

पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्
त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम् ।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥ 60

जनित्वाऽहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम् ।
निसर्गादेव त्वच्चरणकमलैकान्तमनसाम्
अधोऽधः पापात्मा शरणद निमज्जामि तमसि ॥ 61



अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेः
अपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ 62

रघुवर यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यच्च चैद्यस्य कृष्ण ।
प्रतिभवमपराद्धुर्मुग्ध सायुज्यदोऽभूः
वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥ 63

ननु प्रपन्नः सकृदेव नाथ
तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतः प्रतिज्ञां
मदेकवर्जं किमिदं व्रतं ते ॥ 64

अकृत्रिमत्वच्चरणारविन्द-
प्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य
प्रसीद मद्वृत्तमचिन्तयित्वा ॥ 65

**श्रीस्तोत्ररत्नं समाप्तम्**

---

**कवितार्किकसिंहाय कल्याणगुणशालिने ।**
**श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥**

**श्रीमते भगवद्यामुनमुनये नमः**

**श्रीमते निगमान्तमहादेशिकाय नमः**

---

श्रीः

श्रीमते भगवद्रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

**श्रीभगवद्रामानुजमुनिभिः अनुगृहीतं**

# श्रीगद्यत्रयम्

## श्रीशरणागतिगद्यम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् ।
प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुतिम् ॥

भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणां पद्मवनालयां भगवतीं श्रियं देवीं नित्यानपायिनीं निरवद्यां देवदेवदिव्यमहिषीम् अखिलजगन्मातरम् (अस्मन्मातरम्) अशरण्यशरण्याम् अनन्यशरणः शरणमहं प्रपद्ये ॥

पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैंकर्यप्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्दशरणागतिः यथावस्थिता अविरता अस्तु मे ॥

अस्तु ते ; तयैव सर्वं संपत्स्यते ॥

अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूप, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्य-



सौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूप, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसंकल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णव, स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्धनिरतिशयसुखस्पर्शनिरतिशयौज्ज्वल्यकिरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषण, स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदासिशार्ङ्गाद्यसंख्येयनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध, स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभ, एवंभूतभूमिनीलानायक, स्वच्छन्दानुवर्तिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तकल्याणगुणशेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल, परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्वाभिमतविविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाणनित्यनिरवद्यनिरतिशयवैकुण्ठनाथ, स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिस्वशेषतैकस्वभावप्रकृतिपुरुषकालात्मकविविधविचित्रानन्तभोग्यभोक्तृवर्गभोगोपकरणभोगस्थानरूपनिखिलजगदुदयविभवलयलील, सत्यकाम, सत्यसंकल्प, परब्रह्मभूत, पुरुषोत्तम, महाविभूते, श्रीमन्, नारायण, वैकुण्ठनाथ, अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकजलधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, अशेषचराचरभूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषिभूत, निखिलजगदाधार, अखिलजगत्स्वामिन्, अस्मत्स्वामिन्, सत्यकाम, सत्यसंकल्प, सकलेतरविलक्षण, अर्थिकल्पक, आपत्सख, श्रीमन्, नारायण, अशरण्यशरण्य, अनन्यशरणः त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये ॥

अत्र द्वयम्—

पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून् ।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥

सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान् ।
लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ॥

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः
लोकत्रयेऽप्यप्रतिमप्रभाव ॥

तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥

मनोवाक्कायैः अनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभगवदपचार-भागवतापचारासह्यापचाररूपनानाविधानन्तापचारान् आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च सर्वान् अशेषतः क्षमस्व ॥

अनादिकालप्रवृत्तविपरीतज्ञानम् आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं च अशेषविषयम् अद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥

मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण च अवस्थितां दैवीं गुणमयीं मायां, दासभूतः शरणागतोऽस्मि, तवास्मि दास इति वक्तारं मां तारय ॥



"तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥"

इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व । 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' 'भक्त्या त्वनन्यया शक्यः' 'मद्भक्तिं लभते पराम्' इति स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व । परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व । परभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवोऽहं तथाविधभगवदनुभवजनितानवधिकातिशय - प्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिङ्करो भवानि ॥

एवंभूतमत्कैङ्कर्यप्राप्त्युपायतया अवक्लृप्तसमस्तवस्तुविहीनोऽपि, अनन्ततद्विरोधिपापाक्रान्तोऽपि, अनन्तमदपचारयुक्तोऽपि, अनन्तमदीयापचारयुक्तोऽपि, अनन्तासह्यापचारयुक्तोऽपि, एतत्कार्यकारणभूतानादिविपरीताहङ्कारविमूढात्मस्वभावोऽपि, एतदुभयकार्यकारणभूतानादिविपरीतवासनासंबद्धोऽपि, एतदनुगुणप्रकृतिविशेषसंबद्धोऽपि, एतन्मूलाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखतद्धेतुतदितरोपेक्षणीयविषयानुभवज्ञानसंकोचरूपमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नप्रतिहतोऽपि, येन केनापि प्रकारेण द्वयवक्ता त्वं केवलं मदीययैव दयया निःशेषविनष्टसहेतुकमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिविघ्नः, मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिः, मत्प्रसादादेव साक्षात्कृतयथावस्थितमत्स्वरूपरूपगुणविभूतिलीलोपकरणविस्तारः, अपरोक्षसिद्धमन्नियाम्यतामद्दास्यैकस्वभावात्मस्वरूपः, मदेकानुभवः, मद्दास्यैकप्रियः, परिपूर्णानवरतनित्यविशदतमानन्यप्रयो-

जनानवधिकातिशयप्रियमदनुभवः त्वं तथाविधमदनुभवजनितानवधिकातिशय-प्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिंकरो भव ॥ एवं भूतोऽसि ॥

आध्यात्मिकाधिभौतिकाधिदैविकदुःखविघ्नगन्धरहितस्त्वं द्वयमर्थानुसंधानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व । शरीरपातसमये तु केवलं मदीययैव दयया अतिप्रबुद्धः मामेवावलोकयन्, अप्रच्युतपूर्वसंस्कारमनोरथः, जीर्णमिव वस्त्रं सुखेन इमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य, तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृत-परिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयप्रियमदनुभवजनितान-वधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिंकरो भविष्यसि ॥

मा ते भूत् अत्र संशयः । 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।' 'रामो द्विर्नाभिभाषते ।' 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥' 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥' इति मयैव हि उक्तम् ॥

अतस्त्वं तव तत्त्वतो मद्ज्ञानदर्शनप्राप्तिषु निःसंशयः सुखमास्व ॥

श्रीशरणागतिगद्यं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते भगवद्रामानुजमुनये नमः

श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः
श्रीमते भगवद्रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

# श्रीरङ्गगद्यम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं, क्लेशकर्माद्यशेषदोषा-संस्पृष्टं, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्यशौर्यपराक्रमसत्यकामसत्यसंकल्पकृतित्वकृतज्ञताद्यसंख्येयकल्याणगुणगणौघमहार्णवं, परब्रह्मभूतं, पुरुषोत्तमं, श्रीरङ्गशायिनं, अस्मत्स्वामिनं, प्रबुद्धनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावोऽहं तदेकानुभवः तदेकप्रियः, परिपूर्णं भगवन्तं विशदतमानुभवेन निरन्तरमनुभूय, तदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकिंकरो भवानि ॥

स्वात्मनित्यनियाम्यनित्यदास्यैकरसात्मस्वभावानुसंधानपूर्वकभगवदनवधिकातिशयस्वाम्याद्यखिलगुणगणानुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैंकर्यप्राप्त्युपायभूतभक्तितदुपायसम्यग्ज्ञानतदुपायसमीचीनक्रियातदनुगुणसात्त्विकतास्तिक्यादिसमस्तात्मगुणविहीनः, दुरुत्तरानन्ततद्विपर्ययज्ञानक्रियानुगुणानादिपापवासनामहार्णवान्तर्निमग्नः, तिलतैलवत् दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्मायातिरोहितस्वप्रकाशः, अनाद्यविद्यासंचितानन्ताशक्यविस्रंसनकर्मपाशप्रग्रथितः, अनागतानन्तकालसमीक्षयाऽपि अदृष्टसंतारोपायः, निखिलजन्तुजातशरण्य, श्रीमन्नारायण, तव चरणारविन्दयुगलं शरणमहं प्रपद्ये ॥

एवमवस्थितस्यापि अर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभवप्रीत्योपनीतैकान्तिकात्यन्तिकनित्यकैङ्कर्यैकरतिरूपनित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिंकरतां प्रार्थये ॥

तवानुभूतिसंभूतप्रीतिकारितदासताम् ।
देहि मे कृपया नाथ न जाने गतिमन्यथा ॥
सर्वावस्थोचिताशेषशेषतैकरतिस्तव ।
भवेयं पुण्डरीकाक्ष त्वमेवैवं कुरुष्व माम् ॥

एवंभूततत्त्वयाथात्म्यावबोधतदिच्छारहितस्यापि एतदुच्चारणमात्रावलम्बनेन उच्यमानार्थपरमार्थनिष्ठं मे मनः त्वमेव अद्यैव कारय ॥

अपारकरुणाम्बुधे, अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकमहोदधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, सत्यकाम, सत्यसंकल्प, आपत्सख, काकुत्स्थ, श्रीमन् , नारायण, पुरुषोत्तम, श्रीरङ्गनाथ, मम नाथ, नमोऽस्तु ते ॥

श्रीरङ्गगद्यं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते भगवद्रामानुजमुनये नमः

श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः
श्रीमते भगवद्रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

# श्रीवैकुण्ठगद्यम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

यामुनार्यसुधाम्भोधिमवगाह्य यथामति ।
आदाय भक्तियोगाख्यं रत्नं संदर्शयाम्यहम् ॥

---

स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदं, क्लेशकर्माद्यशेषदोषासंस्पृष्टं, स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवं, परमपुरुषं, भगवन्तं श्रीमन्नारायणं स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य, ऐकान्तिकात्यन्तिकतत्पादाम्बुजद्वयपरिचर्यैकमनोरथः, तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यत् न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः, तस्यैव भगवतो नारायणस्य अखिलसत्त्वदयैकसागरस्य, अनालोचितगुणगणाखण्डजनानुकूलामर्यादशीलवतः, स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजनहृदयानन्दनस्य, आश्रितवात्सल्यैकजलधेः, भक्तजनसंश्लेषैकभोगस्य, नित्यज्ञानक्रियैश्वर्यादिभोगसामग्रीसमृद्धस्य महाविभूतेः श्रीमच्चरणारविन्दयुगलम् अनन्यात्मसंजीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ॥

ततश्च प्रत्यहमात्मोज्जीवनाय एवमनुस्मरेत्—चतुर्दशभुवनात्मकम् अण्डं दशगुणितोत्तरं च आवरणसप्तकं समस्तं कार्यकारणजातमतीत्य वर्तमाने, परमव्योमशब्दाभिधेये, ब्रह्मादीनां वाङ्मनसागोचरे, श्रीमति वैकुण्ठे दिव्यलोके, सनकविधिशिवादिभिरपि अचिन्त्यस्वभावैश्वर्यैः नित्यसिद्धैः अनन्तैः भगवदानुकूल्यैकभोगैः दिव्यपुरुषैः महात्मभिरापूरिते, तेषामपि इयत्परिमाणम् इयदैश्वर्यम् ईदृशस्वभावमिति परिच्छेत्तुमयोग्ये, दिव्यावरणशतसहस्रावृते, दिव्यकल्पतरूप-

शोभिते, दिव्योद्यानशतसहस्रकोटिभिरावृते, अतिप्रमाणे दिव्यायतने, कस्मिंश्चित्
विचित्रदिव्यरत्नमये दिव्यास्थानमण्डपे, दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशो-
भिते, दिव्यनानारत्नकृतस्थलविचित्रिते, दिव्यालंकारालंकृते, परितः पतितैः
पतमानैः पादपस्थैश्च नानागन्धवर्णैः दिव्यपुष्पैः शोभमानैः दिव्यपुष्पोपवनैः
उपशोभिते, संकीर्णपारिजातादिकल्पद्रुमोपशोभितैः असंकीर्णैश्च कैश्चित् अन्तः-
स्थपुष्परत्नादिनिर्मितदिव्यलीलामण्डपशतसहस्रोपशोभितैः सर्वदा अनुभूयमानै-
रपि अपूर्ववत् आश्चर्यमुपजनयद्भिः क्रीडाशैलशतसहस्रैरलंकृतैः कैश्चित् नारा-
यणदिव्यलीलाऽसाधारणैः कैश्चित् पद्मवनालयादिव्यलीलाऽसाधारणैः साधारणैश्च
कैश्चित् शुकशारिकामयूरकोकिलादिभिः कोमलकूजितैः आकुलैः दिव्योद्यान-
शतसहस्रैः आवृते, मणिमुक्ताप्रवालकृतसोपानैः दिव्यामलामृतरसोदकैः दिव्याण्ड-
जवरैः अतिरमणीयदर्शनैः अतिमनोहरमधुरस्वरैः आकुलैः अन्तःस्थमुक्तामय-
दिव्यक्रीडास्थानोपशोभितैः दिव्यसौगन्धिकवापीशतसहस्रैः दिव्यराजहंसावली-
विराजितैः आवृते, निरस्तातिशयानन्दैकरसतया च आनन्त्याच्च प्रविष्टान्
उन्मादयद्भिः क्रीडोद्देशैः विराजिते, तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते,
नानापुष्पासवास्वादमत्तभृङ्गावलीभिः उद्गीयमानदिव्यगान्धर्वेण आपूरिते, चन्द-
नागरुकर्पूरदिव्यपुष्पावगाहिमन्दानिलासेव्यमाने, मध्ये दिव्यपुष्पसंचयविचित्रिते
महति दिव्ययोगपर्यङ्के अनन्तभोगिनि, श्रीमद्वैकुण्ठैश्वर्यादिदिव्यलोकम् आत्म-
कान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादिकं सर्वं परिजनं भगवतः तत्तदवस्थो-
चितपरिचर्यायाम् आज्ञापयन्त्या शीलरूपगुणविलासादिभिः आत्मानुरूपया
श्रिया सह आसीनम्, स्वच्छनीलजीमूतसंकाशम्, अत्युज्ज्वलितपीतवाससम्,
स्वया प्रभया अतिनिर्मलया अतिशीतलया अतिकोमलया स्वच्छमाणिक्याभया
कृत्स्नं जगत् उद्भासयन्तम्, अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृत-
सागरम्, अतिसौकुमार्यात् ईषत्प्रस्विन्नवत् आलक्ष्यमाणललाटफलकदिव्याल-
कावलीविराजितम्, प्रबुद्धमुग्धाम्बुजचारुलोचनं, सविभ्रमभ्रूलतम्, उज्ज्वला-
धरं, शुचिस्मितं, कोमलगण्डम्, उन्नसम्, उदग्रपीनांसविलम्बिकुण्डलाल-
कावलीबन्धुरकम्बुकन्धरं, प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः



चतुर्भिः आजानुविलम्बिभिः भुजैः विराजितम्, अतिकोमलदिव्यरेखालंकृता-
ताम्रकरतलं, दिव्याङ्गुलीयकविराजितम्, अतिकोमलदिव्यनखावलीविरा-
जितातिरक्ताङ्गुलीभिः अलंकृतम्, तत्क्षणोन्मीलितपुण्डरीकसदृशचरणयुगलम्,
अतिमनोहरकिरीटमकुटचूडावतंस - मकरकुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौ-
स्तुभमुक्तादामोदरबन्धनपीताम्बरकाञ्चीगुणनूपुरादिभिः अत्यन्तसुखस्पर्शैः दिव्य-
गन्धैः भूषणैः भूषितं, श्रीमत्या वैजयन्त्या वनमालया विराजितं, शङ्खचक्र-
गदासिशार्ङ्गादिदिव्यायुधैः सेव्यमानं, स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वं-
सादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यम्, वैनतेयादिभिः स्वभावतो
निरस्तसमस्तसांसारिकस्वभावैः भगवत्परिचर्याकरणयोग्यैः भगवत्परिचर्यैकभोगैः
नित्यसिद्धैः अनन्तैः यथायोगं सेव्यमानम्, आत्मभोगेन अननुसंहितपरादिकालं,
दिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तम्, ईषदुन्मीलितमुखाम्बुजोदरविनिर्ग-
तेन दिव्यनानारविन्दशोभाजननेन दिव्यगाम्भीर्यौदार्यसौन्दर्यमाधुर्याद्यनवधिक-
गुणगणविभूषितेन अतिमनोहरदिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिल-
जनहृदयान्तराणि आपूरयन्तं भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा, ततो भगवतो
नित्यस्वाम्यम्, आत्मनो नित्यदास्यं च यथावस्थितम् अनुसन्धाय, 'कदाऽहं
भगवन्तं नारायणं मम कुलनाथं मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं
मम पितरं मम सर्वं साक्षात्करवाणि चक्षुषा? कदाऽहं भगवत्पादाम्बुजद्वयं
शिरसा संग्रहीष्यामि? कदाऽहं भगवत्पादाम्बुजद्वयपरिचर्याशया निरस्तसमस्ते-
तरभोगाशः अपगतसमस्तसांसारिकस्वभावः तत्पादाम्बुजद्वयं प्रवेक्ष्यामि? कदाऽहं
भगवत्पादाम्बुजद्वयपरिचर्याकरणयोग्यः तदेकभोगः तत्पादौ परिचरिष्यामि?
कदा मां भगवान् स्वकीयया अतिशीतलया दृशा अवलोक्य स्निग्धगम्भीर-
मधुरया गिरा परिचर्यायाम् आज्ञापयिष्यति?' इति भगवत्परिचर्यायाम् आशां
वर्धयित्वा तयैव आशया तत्प्रसादोपबृंहितया भगवन्तमुपेत्य, दूरादेव भगवन्तं
शेषभोगे श्रिया सह आसीनं वैनतेयादिभिः सेव्यमानं 'समस्तपरिवाराय श्रीमते
नारायणाय नमः' इति प्रणम्य उत्थाय पुनः पुनः प्रणम्य, अत्यन्तसाध्वस-
विनयावनतो भूत्वा, भगवत्पारिषदगणनायकैः द्वारपालैः कृपया स्नेहगर्भया दृशा

अवलोकितः, सम्यगभिवन्दितैः तैस्तैरेव अनुमतो भगवन्तमुपेत्य, श्रीमता मूलमन्त्रेण 'माम् ऐकान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्व' इति याचमानः प्रणम्य, आत्मानं भगवते निवेदयेत् ॥

ततो भगवता स्वयमेव आत्मसंजीवनेन अमर्यादशीलवता अतिप्रेमान्वितेन अवलोकनेन अवलोक्य सर्वदेशसर्वकालसर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतः अनुज्ञातश्च, अत्यन्तसाध्वसविनयावनतः किंकुर्वाणः कृताञ्जलिपुटो भगवन्तमुपासीत ॥

ततश्च अत्यन्तानुभूयमानभावविशेषः, निरतिशयप्रीत्या अन्यत् किंचित् कर्तुं द्रष्टुं स्मर्तुमशक्तः, पुनरपि शेषभावमेव याचमानः, भगवन्तमेव अविच्छिन्नस्रोतोरूपेण अवलोकनेन अवलोकयन् आसीत ॥

ततो भगवता स्वयमेव आत्मसंजीवनेन अवलोकनेन अवलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहम् आत्मीयं श्रीमत् पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवः सुखमासीत ॥

श्रीवैकुण्ठगद्यं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते भगवद्रामानुजमुनये नमः

श्रीमते निगमान्तमहादेशिकाय नमः

---





श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः

कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेङ्कटनाथैः
श्रीमन्निगमान्तमहादेशिकैः अनुगृहीतानि

# स्तोत्राणि

## श्रीहयग्रीवस्तोत्रम् - 1

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

1 ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ 1

2 स्वतः सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ 2

3 समाहारः साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कथककुलकोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ 3

4 प्राची सन्ध्या काचिदन्तर्निशायाः
प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा
वागीशाख्या वासुदेवस्य मूर्तिः ॥ 4

5 विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणनबद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥ 5

6 अपौरुषेयैरपि वाक्प्रपञ्चैः अद्यापि ते भूतिमदृष्टपाराम् ।
स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ कटाक्षणीयः ॥ 6

7 दाक्षिण्यरम्या गिरिशस्य मूर्तिः देवी सरोजासनधर्मपत्नी ।
व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥ 7

8 मन्दोऽभविष्यन्नियतं विरिञ्चो
वाचां निधे वञ्चितभागधेयः ।
दैत्यापनीतान् दययैव भूयोऽपि
अध्यापयिष्यो निगमान् न चेत् त्वम् ॥ 8

9 वितर्कडोलां व्यवधूय सत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणाम् अस्पृष्टडोलायितमाधिराज्यम् ॥ 9

10 अग्नौ समिद्धार्चिषि सप्ततन्तोः आतस्थिवान् मन्त्रमयं शरीरम् ।
अखण्डसारैर्हविषां प्रदानैः आप्यायनं व्योमसदां विधत्से ॥ 10

11 यन्मूलमीदृक् प्रतिभाति तत्त्वं या मूलमाम्नायमहाद्रुमाणाम् ।
तत्त्वेन जानन्ति विशुद्धसत्त्वाः तामक्षरामक्षरमातृकां त्वाम् ॥ 11

12 अव्याकृताद्व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर त्वां त्वदुपज्ञवाचः ॥ 12



13 मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः ॥ 13

14 मनोगतं पश्यति यः सदा त्वां मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः किंकुर्वते तस्य गिरो यथार्हम् ॥ 14

15 अपि क्षणार्धं कलयन्ति ये त्वाम् आप्लावयन्तं विशदैर्मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ 15

16 स्वामिन् भवद्ध्यानसुधाभिषेकात् वहन्ति धन्याः पुलकानुबन्धम् ।
अलक्षिते क्वापि निरूढमूलम् अङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥ 16

17 स्वामिन् प्रतीचा हृदयेन धन्याः त्वद्ध्यानचन्द्रोदयवर्धमानम् ।
अमान्तमानन्दपयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति ॥ 17

18 स्वैरानुभावास्त्वदधीनभावाः समृद्धवीर्यास्त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां वैहारिकीं मोहनपिञ्छिकां ते ॥ 18

19 प्राङ्निर्मितानां तपसां विपाकाः प्रत्यग्रनिःश्रेयससंपदो मे ।
समेधिषीरन् तव पादपद्मे सङ्कल्पचिन्तामणयः प्रणामाः ॥ 19

20 विलुप्तमूर्धन्यलिपिक्रमाणां सुरेन्द्रचूडापदलालितानाम् ।
त्वदङ्घ्रिराजीवरजःकणानां भूयान् प्रसादो मयि नाथ भूयात् ॥ 20

21 परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूततमोनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः प्रबोधराजीवविभातसन्ध्याम् ॥ 21

22 त्वत्किङ्करालङ्करणोचितानां त्वयैव कल्पान्तरपालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः ॥ 22

23 संचिन्तयामि प्रतिभादशास्थान् संधुक्षयन्तं समयप्रदीपान् ।
विज्ञानकल्पद्रुमपल्लवाभं व्याख्यानमुद्रामधुरं करं ते ॥ 23

24 चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चनलम्पटानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥ 24

25 प्रबोधसिन्धोररुणैः प्रकाशैः प्रवाळसंघातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम् ॥ 25

26 तमांसि भित्त्वा विशदैर्मयूखैः संप्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥ 26

27 दिशन्तु मे देव सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ॥ 27

28 विशेषवित्पारिषदेषु नाथ विदग्धगोष्ठीसमराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥ 28

29 त्वां चिन्तयन् त्वन्मयतां प्रपन्नः त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन् समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥ 29

30 नानाविधानामगतिः कलानां न चापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहायाः नवं नवं पात्रमहं दयायाः ॥ 30

31 अकम्पनीयान्यपनीतिभेदैः अलंकृषीरन् हृदयं मदीयम् ।
शङ्काकळङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥ 31

32 व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
विभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।



अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन् मां
आविर्भूयादनघमहिमा मानसे वागधीशः । 32

33 वागर्थसिद्धिहेतोः पठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥ 33

**श्रीहयग्रीवस्तोत्रं समाप्तम्**

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

**श्रीमते निगमान्तमहादेशिकाय नमः**

---

श्रीः

## श्रीदशावतारस्तोत्रम्-2

**श्रीमते निगमान्तमहादेशिकाय नमः**

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

34 देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ 1

35 निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैः
अन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्खणमिथःप्रत्यूढपाथश्छटा-
डोलारोहसदोहळं भगवतो मात्स्यं वपुः पातु नः ॥ 2

36 अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोळपर्यङ्किका-
नित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥ 3

37 गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत-
ब्रह्माण्डः प्रळयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः
ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥ 4

38 प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः
अव्यात् त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचित् सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥ 5

39 व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटः
त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः
स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥ 6

40 क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन् क्रमात्
अक्षत्रामिह संततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्
अब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥ 7

41 पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥ 8



42 फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादयः
तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः
आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ 9

43 नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमैः
भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्या यते ॥ 10

44 भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलङ्कषः ।
निश्शेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ 11

45 इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ 12

46 विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गळं
देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः ।
वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे
शुद्धिः काऽपि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ 13

श्रीदशावतारस्तोत्रं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्रीभगवद्ध्यानसोपानम् - 3

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

47 अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेः
चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।
दीनानाथव्यसनशमनं दैवतं दैवतानां
दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥ 1

48 वेलातीतश्रुतिपरिमळं वेधसां मौलिसेव्यं
प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः
पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥ 2

49 चित्ताकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां
काले दूत्यद्रुततरगतिं कान्तिलीलाकलाचीम् ।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥ 3

50 कामारामस्थिरकदलिकास्तम्भसंभावनीयं
क्षौमाश्लिष्टं किमपि कमलाभूमिनीळोपधानम् ।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं
लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः ॥ 4



51 संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात् क्वचन समये गूढनिक्षिप्तविश्वा ।
नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा
रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥ 5

52 श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या
संतापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥ 6

53 एकं लीलोपहितमितरं बाहुमाजानुलम्बं
प्राप्ता रङ्गे शयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां
चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥ 7

54 साभिप्रायस्मितविकसितं चारुबिम्बाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालङ्कृतं रङ्गभर्तुः
स्वान्ते गाढं मम विलगति स्वागतोदारनेत्रम् ॥ 8

55 माल्यैरन्तः स्थिरपरिमळैर्वल्लभास्पर्शमान्यैः
कुप्यच्चोळीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥ 9

56 पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घाम्
ऊरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा
वक्त्राभिख्यां पिबति वहते वासनां मौळिबन्धे ॥ 10

57 कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कैः
लक्ष्मीधाम्नः पृथुळपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किञ्चिद्भुजगशयनः स्वात्मनैवात्मनः सन्
मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥ 11

58 रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते
विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां
भक्तिं गाढां दिशतु भगवद्ध्यानसोपानमेतत् ॥ 12

श्रीभगवद्ध्यानसोपानं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्री-अभीतिस्तवः - 4

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

59 अभीतिरिह यज्जुषां यदवधीरितानां भयं
भयाभयविधायिनो जगति यन्निदेशे स्थिताः ।
तदेतदतिलङ्घितद्रुहिणशम्भुशक्रादिकं
रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥ 1



60 दयाशिशिरिताशया मनसि मे सदा जागृयुः
श्रियाऽध्युषितवक्षसः श्रितमरुद्वृधासैकताः ।
जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृशः
सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ 2

61 यदद्य मितबुद्धिना बहुळमोहभाजा मया
गुणग्रथितकायवाङ्मनसवृत्तिवैचित्र्यतः ।
अतर्कितहिताहितक्रमविशेषमारभ्यते
तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥ 3

62 मरुत्तरणिपावकत्रिदशनाथकालादयः
स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः ।
महत् किमपि वज्रमुद्यतमिवेति यच्छ्रूयते
तरत्यनघ तद्भयं य इह तावकः स्तावकः ॥ 4

63 भवन्तमिह यः स्वधीनियतचेतनाचेतनं
पनायति नमस्यति स्मरति वक्ति पर्येति वा ।
गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः
कदाचन कुतश्चन क्वचन तस्य न स्यात् भयम् ॥ 5

64 स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति
स्मरेदखिलदेहिनं य इह जातुचित् त्वामजम् ।
तयैव खलु संधया तमथ दीर्घनिद्रावशं
स्वयं विहितसंस्मृतिर्नयसि धाम नैःश्रेयसम् ॥ 6

65 रमादयित रङ्गभूरमण कृष्ण विष्णो हरे
त्रिविक्रम जनार्दन त्रियुग नाथ नारायण ।
इतीव शुभदानि यः पठति नामधेयानि ते
न तस्य यमवश्यता नरकपातभीतिः कुतः ॥ 7

66 कदाचिदपि रङ्गभूरसिक यत्र देशे वशी
त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते ।
तदक्षततपोवनं तव च राजधानी स्थिरा
सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥ 8

67 त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनोद्योगिनां
द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयाः ।
स्खलत्समयकातरीहरणजागरूकाः प्रभो
करग्रहणदीक्षिताः क इव ते न दिव्या गुणाः ॥ 9

68 बिभेति भवभृत् प्रभो त्वदुपदेशतीव्रौषधात्
कदध्वरसदुर्विषे बळिशभक्ष्यवत् प्रीयते ।
अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी
तमप्यवसरे क्रमादवति वत्सला त्वद्दया ॥ 10

69 अपार्थ इति निश्चितः प्रहरणादियोगस्तव
स्वयं वहसि निर्भयस्तदपि रङ्गपृथ्वीधर ।
स्वरक्षणमिवाभवत् प्रणतरक्षणं तावकं
यदात्थ परमार्थविन्नियतमन्तरात्मेति ते ॥ 11

70 लघिष्ठसुखसङ्गदैः स्वकृतकर्मनिर्वर्तितैः
कळत्रसुतसोदरानुचरबन्धुसंबन्धिभिः ।
धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैः
न बिभ्रति धृतिं प्रभो त्वदनुभूतिभोगार्थिनः ॥ 12

71 न वक्तुमपि शक्यते नरकगर्भवासादिकं
वपुश्च बहुधातुकं निपुणचिन्तने तादृशम् ।
त्रिविष्टपमुखं तथा तव पदस्य देदीपतः
किमत्र न भयास्पदं भवति रङ्गपृथ्वीपते ॥ 13



72 भवन्ति मुखभेदतो भयनिदानमेव प्रभो
शुभाशुभविकल्पिता जगति देशकालादयः ।
इति प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चेत्
क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ 14

73 सकृत्प्रपदनस्पृशामभयदाननित्यव्रती
न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।
यथोक्तकरणं विदुस्तव तु यातुधानादयः
कथं वितथमस्तु तत् कृपणसार्वभौमे मयि ॥ 15

74 अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे
यदि क्वचन निष्कृतिर्भवति साऽपि दोषाविला ।
तदित्थमगतौ मयि प्रतिविधानमाधीयतां
स्वबुद्धिपरिकल्पितं किमपि रङ्गधुर्य त्वया ॥ 16

75 विषादबहुळादहं विषयवर्गतो दुर्जयात्
बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः ।
मया नियतनाथवानयमिति त्वमर्थापयन्
दयाधन जगत्पते दयितरङ्ग संरक्ष माम् ॥ 17

76 निसर्गनिरनिष्टता तव निरंहसः श्रूयते
ततस्त्रियुग सृष्टिवत् भवति संहृतिः क्रीडितम् ।
तथाऽपि शरणागतप्रणयभङ्गभीतो भवान्
मदिष्टमिह यद्भवेत् किमपि मा स्म तज्जीहपत् ॥ 18

77 कयाधुसुतवायसद्विरदपुङ्गवद्रौपदी-
विभीषणभुजङ्गमव्रजगणाम्बरीषादयः ।
भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा
लभेमहि तथा वयं सपदि रङ्गनाथ त्वया ॥ 19

78 भयं शमय रङ्गधाम्न्यनितराभिलाषस्पृशां
श्रियं बहुळय प्रभो श्रितविपक्षमुन्मूलय ।
स्वयं समुदितं वपुस्तव निशामयन्तः सदा
वयं त्रिदशनिर्वृतिं भुवि मुकुन्द विन्देमहि ॥ 20

79 श्रियः परिबृढे त्वयि श्रितजनस्य संरक्षके
सदद्भुतगुणोदधाविति समर्पितोऽयं भरः ।
प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु
प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ 21

80 कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैः
तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् ।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः
क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥ 22

81 दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं
तमःप्रमथनं प्रभो समुदितास्त्रबृन्दं स्वतः ।
स्ववृत्तिवशवर्तितत्रिदशवृत्ति चक्रं पुनः
प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥ 23

82 मनुप्रभृतिमानिते महति रङ्गधामादिके
दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः ।
प्रकृष्टगुणक श्रिया वसुधया च संधुक्षितः
प्रयुक्तकरुणोदधिः प्रशमय स्वशक्त्या स्वयम् ॥ 24

83 भुजङ्गमविहङ्गमप्रवरसैन्यनाथाः प्रभो
तथैव कुमुदादयो नगरगोपुरद्वारपाः ।
अचिन्त्यबलविक्रमास्त्वमिव रङ्गसंरक्षकाः
जितं त इति वादिनो जगदनुग्रहे जाग्रतु ॥ 25



84 विधित्रिपुरमर्दनत्रिदशपुङ्गवः पावकः
यमप्रभृतयोऽपि यद्विमतरक्षणे न क्षमाः ।
रिरक्षिषति यत्र च प्रतिभयं न किञ्चित् क्वचित्
स नः प्रतिभटान् प्रभो शमय रङ्गधामादिषु ॥ 26

85 स कैटभतमोरविर्मधुपरागझञ्झामरुत्
हिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिन्धयः
त्रिविक्रम भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥ 27

86 यतिप्रवरभारतीरसभरेण नीतं वयः
प्रफुल्लपलितं शिरः परमिह क्षमं प्रार्थये ।
निरस्तरिपुसंभवे क्वचन रङ्गमुख्ये विभो
परस्परहितैषिणां परिसरेषु मां वर्तय ॥ 28

87 प्रबुद्धगुरुवीक्षणप्रथितवेङ्कटेशोद्भवाम्
इमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ।
भयं त्यजत भद्रमित्यभिदधत् स वः केशवः
स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥ 29

**श्री अभीतिस्तवः समाप्तः**

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्रीदयाशतकम् - 5

**श्रीमते निगमान्तमहादेशिकाय नमः**

**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।**
**वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥**

---

88 प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया ।
इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥ 1

89 विगाहे तीर्थबहुळां शीतळां गुरुसंततिम् ।
श्रीनिवासदयाम्भोधिपरीवाहपरंपराम् ॥ 2

90 कृतिनः कमलावासकारुण्यैकान्तिनो भजे ।
धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ 3

91 पराशरमुखान् वन्दे भगीरथनये स्थितान् ।
कमलाकान्तकारुण्यगङ्गाप्लावितमद्विधान् ॥ 4

92 अशेषविघ्नशमनमनीकेश्वरमाश्रये ।
श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम् ॥ 5

93 समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् ।
श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥ 6

94 वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् ।
तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥ 7

95 निशामयतु मां नीळा यद्भोगपटलैर्ध्रुवम् ॥
भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥ 8



96 कमप्यनवधिं वन्दे करुणावरुणालयम् ।
वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥ 9

97 अकिंचननिधिं सूतिमपवर्गत्रिवर्गयोः ।
अञ्जनाद्रीश्वरदयाम् अभिष्टौमि निरञ्जनाम् ॥ 10

98 अनुचरशक्त्यादिगुणाम् अग्रेसरबोधविरचितालोकाम् ।
स्वाधीनवृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ॥ 11

99 अपि निखिललोकसुचरितमुष्टिंधयदुरितमूर्च्छनाजुष्टम् ।
संजीवयतु दये माम् अञ्जनगिरिनाथरञ्जनी भवती ॥ 12

100 भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे ।
अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥ 13

101 कृपणजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् ।
वृषगिरिनाथदये त्वां विदन्ति संसारतारिणीं विबुधाः ॥ 14

102 वृषगिरिगृहमेधिगुणाः बोधबलैश्वर्यवीर्यशक्तिमुखाः ।
दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥ 15

103 आसृष्टिसंततानाम् अपराधानां निरोधिनीं जगतः ।
पद्मासहायकरुणे प्रतिसंचरकेळिमाचरसि ॥ 16

104 अचिदविशिष्टान् प्रळये जन्तूनवलोक्य जातनिर्वेदा ।
करणकळेबरयोगं वितरसि वृषशैलनाथकरुणे त्वम् ॥ 17

105 अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा ।
शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥ 18

106 रूढा वृषाचलपतेः पादे मुखकान्तिपत्रळच्छाया ।
करुणे सुखयसि विनतान् कटाक्षविटपैः करापचेयफलैः ॥ 19

107 नयने वृषाचलेन्दोः तारामैत्रीं दधानया करुणे ।
दृष्टस्त्वयैव जनिमान् अपवर्गमकृष्टपच्यमनुभवति ॥ 20

108 समयोपनतैस्तव प्रवाहैः अनुकम्पे कृतसंप्लवा धरित्री ।
शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति ॥ 21

109 कलशोदधिसंपदो भवत्याः करुणे सन्मतिमन्थसंस्कृतायाः ।
अमृतांशमवैमि दिव्यदेहं मृतसंजीवनमञ्जनाचलेन्दोः ॥ 22

110 जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता ।
प्रलयारभटीनटीं तदीक्षां प्रसभं ग्राहयसि प्रसत्तिलास्यम् ॥ 23

111 प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य ।
कळभे यवसापचायनीत्या करुणे किङ्करतां तवोपयाति ॥ 24

112 अबहिष्कृतनिग्रहान् विदन्तः कमलाकान्तगुणान् स्वतन्त्रतादीन् ।
अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ॥ 25

113 कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् ।
अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः ॥ 26

114 अतिलङ्घितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा ।
पुनरेव दये क्षमानिदानैः भवतीमाद्रियते भवत्यधीनैः ॥ 27

115 करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः ।
कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥ 28



116 मयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान् विचिन्वती त्वम् ।
अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ॥ 29

117 अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी ।
विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात् कुरु त्वम् ॥ 30

118 अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ
वपुषि गमनयोग्ये वासमासादयेयम् ।
वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतैः
मधुमथनदये त्वां वारिधाराविशेषैः ॥ 31

119 अविदितनिजयोगक्षेममात्मानभिज्ञं
गुणलवरहितं मां गोप्तुकामा दये त्वम् ।
परवति चतुरैस्ते विभ्रमैः श्रीनिवासे
बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ 32

120 फलवितरणदक्षं पक्षपातानभिज्ञं
प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं
प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ 33

121 अनुभवितुमघौघं नालमागामिकालः
प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।
स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा
शिथिलितभवभीतिः श्रेयसे जायसे नः ॥ 34

122 अवतरणविशेषैरात्मलीलापदेशैः
अवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ।
वृषभशिखरिनाथस्त्वन्निदेशेन नूनं
भजति शरणभाजां भाविनो जन्मभेदान् ॥ 35

123 परहितमनुकम्पे भावयन्त्यां भवत्यां
स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललितरुचिषु लक्ष्मीभूमिनीळासु नूनं
प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या ॥ 36

124 वृषगिरिसविधेषु व्याजतो वासभाजां
दुरितकलुषितानां दूयमाना दये त्वम् ।
करणविलयकाले कान्दिशीकस्मृतीनां
स्मरयसि बहुलीलं माधवं सावधाना ॥ 37

125 दिशि दिशि गतिविद्भिर्देशिकैर्नीयमाना
स्थिरतरमनुकम्पे स्तयानलग्ना गुणैस्त्वम् ।
परिगतवृषशैलं पारमारोपयन्ती
भवजलधिगतानां पोतपाली भवित्री ॥ 38

126 परिमितफलसङ्गात् प्राणिनः किंपचानाः
निगमविपणिमध्ये नित्यमुक्तानुषक्तम् ।
प्रसदनमनुकम्पे प्राप्तवत्या भवत्या
वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥ 39

127 त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्यां
शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ 40

128 आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा
काले दृष्ट्वा कमलवसतेरप्यकिंचित्कराणि ।
पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये
साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥ 41



129 प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं
जन्माकाङ्क्षन् वृषगिरिवने जग्मुषां तस्थुषां वा ।
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्गधन्यैः
अङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥ 42

130 नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभा
क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम् ।
शीता नित्यं प्रसदनवती श्रद्दधानावगाह्या
दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ 43

131 यस्मिन् दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं
सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम् ।
त्वत्स्वीकारात् तमिह कृतिनः सूरिबृन्दानुभाव्यं
नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ 44

132 सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः
काले काले घनरसवती कालिकेवानुकम्पे ।
व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती
शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ 45

133 भीमे नित्यं भवजलनिधौ मज्जतां मानवानाम्
आलम्बार्थं वृषगिरिपतिस्त्वन्निदेशात् प्रयुङ्क्ते ।
प्रज्ञासारं प्रकृतिमहता मूलभागेन जुष्टं
शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥ 46

134 विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां
पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीलादक्षां त्वदनवसरे लाळयन् विप्रलिप्सां
मायाशास्त्राण्यपि दमयितुं त्वत्प्रपन्नप्रतीपान् ॥ 47

135 दैवात् प्राप्ते वृषगिरितटं देहिनि त्वन्निदानात्
स्वामिन् पाहीत्यवशवचने विन्दति स्वापमन्त्यम् ।
देवः श्रीमान् दिशति करुणे दृष्टिमिच्छंस्त्वदीयाम्
उद्घातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ 48

136 श्रेयःसूतिं सकृदपि दये संमतां यः सखीं ते
शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन्
बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ 49

137 दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा
क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ।
विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धाः
मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ 50

138 अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्
अशिथिलधर्मसेतुपदवीं रुचिरामचिरात् ।
अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं
भवति वृषाचलेशपदपत्तननित्यधनी ॥ 51

139 अभिमुखभावसंपदभिसंभविनां भविनां
क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः ।
विमलरसावहा वृषगिरीशदये भवती
सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ 52

140 अपि करुणे जनस्य तरुणेन्दुविभूषणताम्
अपि कमलासनत्वमपि धाम वृषाद्रिपतेः ।
तरतमतावशेन तनुते ननु ते विततिः
परहितवर्ष्मणा परिपचेलिमकेलिमती ॥ 53



141 धृतभुवना दये त्रिविधगत्यनुकूलतरा
वृषगिरिनाथपादपरिरम्भवती भवती ।
अविदितवैभवाऽपि सुरसिन्धुरिवातनुते
सकृदवगाहमानमपतापमपापमपि ॥ 54

142 निगमसमाश्रिता निखिललोकसमृद्धिकरी
भजदघकूलमुद्रुजगतिः परितप्तहिता ।
प्रकटितहंसमत्स्यकमठाद्यवतारशता
विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ 55

143 जगति मितंपचा त्वदितरा तु दये तरळा
फलनियमोज्झिता भवति संतपनाय पुनः ।
त्वमिह निरङ्कुशप्रशकनादिविभूतिमती
वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ 56

144 सकरुणलौकिकप्रभुपरिग्रहनिग्रहयोः
नियतिमुपाधिचक्रपरिवृत्तिपरंपरया ।
वृषभमहीधरेशकरुणे वितरङ्गयतां
श्रुतिमितसंपदि त्वयि कथं भविता विशयः ॥ 57

145 वृषगिरिकृष्णमेघजनितां जनितापहरां
त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये
न जहति सत्पथं जगति चातकवत् कृतिनः ॥ 58

146 त्वदुदयतूलिकाभिरमुना वृषशैलजुषा
स्थिरचरशिल्पिनैव परिकल्पितचित्रधियः ।
यतिपतियामुनप्रभृतयः प्रथयन्ति दये
जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ 59

159 वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी
क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।
भुवनजननी पुंसां भोगापवर्गविधायिनी
वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥ 72

160 स्वयमुदयिनः सिद्धाद्याविष्कृताश्च शुभालयाः
विविधविभवव्यूहावासाः परं च पदं विभोः ।
वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये
दृढविनिहिता निश्रेणिस्त्वं दये निजपर्वभिः ॥ 73

161 हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरैः
अमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणतबहुच्छद्मा पद्मासहायदये स्वयं
प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ 74

162 अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जनान्
अहृदयमिहोपच्छन्द्यैषामसङ्गदशार्थिनी ।
तृषितजनतातीर्थस्नानक्रमक्षपितैनसां
वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम् ॥ 75

163 वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया
भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम् ।
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते
स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः ॥ 76

164 अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे
कृतविदनघा विच्छिद्यैषां कृपे यमवश्यताम् ।
प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं
प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैषिणा ॥ 77



165 क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते
सुरपितृगणे निर्वेशात् प्रागपि प्रळयं गते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां
प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ 78

166 त्वदुपसदनादद्य श्वो वा महाप्रळयेऽपि वा
वितरति-निजं पादाम्भोजं वृषाचलशेखरः ।
तदिह करुणे तत्तत्क्रीडातरङ्गपरंपरा-
तरतमतया जुष्टायास्ते दुरत्ययतां विदुः ॥ 79

167 प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ
प्रसृमरसुधाधाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं
निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ 80

168 कृपे विगतवेलया कृतसमग्रपोषैस्त्वया
कलिज्वलनदुर्गते जगति काळमेघायितम् ।
वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवैः
वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥ 81

169 प्रसूय विविधं जगत् तदभिवृद्धये त्वं दये
समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ।
विचित्रगुणचित्रितां विविधदोषवैदेशिकीं
वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ 82

170 युगान्तसमयोचितं भजति योगनिद्रारसं
वृषक्षितिभृदीश्वरे विहरणक्रमाज्जाग्रति ।
उदीर्णचतुरर्णवीकदनवेदिनी मेदिनीं
समुद्धृतवती दये तदभिजुष्टया दंष्ट्रया ॥ 83

171 सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ॥ 84

172 प्रसक्तमधुना विधिप्रणिहितैः सपर्योदकैः
समस्तदुरितच्छिदा निगमगन्धिना त्वं दये ।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितुः
चराचरमचीकरश्चरणपङ्कजेनाङ्कितम् ॥ 85

173 परश्वथतपोधनप्रथनसत्क्रतूपाकृत-
क्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथाः
निधाय हृदये दये निहतरक्षितानां हितम् ॥ 86

174 कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणे
रमासहचरं तदा रघुधुरीणयन्त्या त्वया ।
व्यभज्यत सरित्पतिः सकृदवेक्षणात् तत्क्षणात्
प्रकृष्टबहुपातकप्रशमहेतुना सेतुना ॥ 87

175 कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं
जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितैः
हतप्रबलदानवैर्हलधरस्य हेलाशतैः ॥ 88

176 प्रभूतविबुधद्विषद्भरणखिन्नविश्वंभरा-
भरापनयनच्छलात् त्वमवतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगमसौधदीपश्रिया
विपश्चिदविगीतया जगति गीतयाऽन्धं तमः ॥ 89



177 वृषाद्रिहयसादिनः प्रबलदोर्मरुत्प्रेङ्खितः
त्विषा स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।
करिष्यति दये कलिप्रबलघर्मनिर्मूलनः
पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ 90

178 विश्वोपकारमिति नाम सदा दुहानाम्
अद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतेर्दये त्वं
न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ 91

179 नैसर्गिकेण तरसा करुणे नियुक्ता
निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद्वृषगिरीश्वरमप्यवार्या
वेलातिलङ्घनदशेव महाम्बुराशेः ॥ 92

180 विज्ञातशासनगतिर्विपरीतवृत्त्या
वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीशदये मयि त्वं
दीने विभोः शमय दण्डधरत्वलीलाम् ॥ 93

181 मासाहसोक्तिघनकञ्चुकवञ्चितान्यः
पश्यत्सु तेषु विदधाम्यतिसाहसानि ।
पद्मासहायकरुणे न रुणत्सि किं त्वं
घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ 94

182 विक्षेपमर्हसि दये विपलायितेऽपि
व्याजं विभाव्य वृषशैलपतेर्विहारम् ।
स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ
द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ 95

183 संतन्यमानमपराधगणं विचिन्त्य
त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीशदये जहीमाम्
आशीविषग्रहणकेळिनिभामवस्थाम् ॥ 96

184 औत्सुक्यपूर्वमुपहृत्य महापराधान्
मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्य तान् निरवशेषमलब्धतृप्तिः
ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥ 97

185 जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां
घर्मोपतप्त इव शीतळतामुदन्वान् ।
सा मामरुन्तुदभरन्यसनानुवृत्तिः
तद्वीक्षणैः स्पृश दये तव केळिपद्मैः ॥ 98

186 दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं
स्नात्वाऽपि धूळिरसिकं भजनेऽपि भीमम् ।
बद्ध्वा गृहाण वृषशैलपतेर्दये मां
त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ 99

187 नातः परं किमपि मे त्वयि नाथनीयं
मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथाऽसौ
मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ 100

188 निःसीमवैभवजुषां मिषतां गुणानां
स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे
सत्यापितं तव बलादकुतोभयत्वम् ॥ 101



189 अद्यापि तद्वृषगिरीशदये भवत्याम्
आरम्भमात्रमनिदंप्रथमस्तुतीनाम् ।
संदर्शितस्वपरनिर्वहणा सहेथाः
मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ 102

190 प्रायो दये त्वदनुभावमहाम्बुराशौ
प्राचेतसप्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतलस्पृशमाप्लुतं मां
पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ 103

191 वेदान्तदेशिकपदे विनिवेश्य बालं
देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं
वीणाविशेषमिव वेङ्कटशैलनाथः ॥ 104

192 अनवधिमधिकृत्य श्रीनिवासानुकम्पाम्
अवितथविषयत्वाद्विश्वमव्रीडयन्ती ।
विविधकुशलनीवी वेङ्कटेशप्रसूता
स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥ 105

193 शतकमिदमुदारं सम्यगभ्यस्यमानान्
वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितरशरणानामाधिराज्येऽभिषिञ्चेत्
शमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ 106

194 विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गां सुधा-
सध्रीचीमिति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत ।
पद्यानामिह यद्विधेयभगवत्सङ्कल्पकल्पद्रुमात्
झञ्झामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः ॥ 107

195 कामं सन्तु मिथःकरम्बितगुणावद्यानि पद्यानि नः
कस्मिन् शतके सदम्बुकतके दोषश्रुतिं क्षाम्यति ।
निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चलन्
दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः ॥ 108

श्रीदयाशतकं समाप्तम्

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीः

## श्रीवरदराजपञ्चाशत् - 6

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

196 द्विरदशिखरिसीम्ना सद्मवान् पद्मयोनेः
तुरगसवनवेद्यां श्यामळो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी
कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥ 1

197 यस्यानुभावमधिगन्तुमशक्नुवन्तः
मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः
क्षन्तव्य एष भवता करिशैलनाथ ॥ 2



198 जानन्ननादि विहितानपराधवर्गान्
स्वामिन् भयात् किमपि वक्तुमहं न शक्तः ।
अव्याजवत्सल तथाऽपि निरङ्कुशं मां
वात्सल्यमेव भवतो मुखरीकरोति ॥ 3

199 किं व्याहरामि वरद स्तुतये कथं वा
खद्योतवत् प्रलघुसंकुचितप्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च
त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि ॥ 4

200 मच्छक्तिमात्रगणने किमिहास्ति शक्यं
शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साधय मया तदपि त्वया वा
किं वा भवेत् भवति किञ्चिदनीहमाने ॥ 5

201 स्तोत्रं मया विरचितं त्वदधीनवाचा
त्वत्प्रीतये वरद यत् तदिदं न चित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां
मञ्जूनि पञ्जरशकुन्तविजल्पितानि ॥ 6

202 यं चक्षुषामविषयं हयमेधयज्वा
द्राघीयसा सुचरितेन ददर्श वेधाः ।
तं त्वां करीश करुणापरिणामतस्ते
भूतानि हन्त निखिलानि निशामयन्ति ॥ 7

203 तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे
शक्रादयो वरद पूर्वमलब्धभागाः ।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव
हैरण्यगर्भहविषां रसमन्वभूवन् ॥ 8

204 सर्गस्थितिप्रळयविभ्रमनाटिकायां
शैलूषवद्विविधवेषपरिग्रहं त्वाम् ।
संभावयन्ति हृदयेन करीश धन्याः
संसारवारिनिधिसंतरणैकपोतम् ॥ 9

205 प्राप्तोदयेषु वरद त्वदनुप्रवेशात्
पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्रदर्शनविलोभितशेमुषीकाः
तादात्म्यमूढमतयो निपतन्त्यधीराः ॥ 10

206 मध्ये विरिञ्चिशिवयोर्विहितावतारः
ख्यातोऽसि तत्समतया तदिदं न चित्रम् ।
मायावशेन मकरादिशरीरिणं त्वां
तानेव पश्यति करीश यदेष लोकः ॥ 11

207 ब्रह्मेति शङ्कर इतीन्द्र इति स्वराडिति
आत्मेति सर्वमिति सर्वचराचरात्मन् ।
हस्तीश सर्ववचसामवसानसीमां
त्वां सर्वकारणमुशन्त्यनपायवाचः ॥ 12

208 आशाधिपेषु गिरिशेषु चतुर्मुखेष्वपि
अव्याहता विधिनिषेधमयी तवाज्ञा ।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां
पुंसां शुभाशुभमयानि फलानि सूते ॥ 13

209 त्राताऽऽपदि स्थितिपदं भरणं प्ररोहः
छाया करीश सरसानि फलानि च त्वम् ।
शाखागतत्रिदशबृन्दशकुन्तकानां
किं नाम नासि महतां निगमद्रुमाणाम् ॥ 14



210 सामान्यबुद्धिजनकाश्च सदादिशब्दाः
तत्त्वान्तरभ्रमकृतश्च शिवादिवाचः ।
नारायणे त्वयि करीश वहन्त्यनन्यम्
अन्वर्थवृत्तिपरिकल्पितमैककण्ठ्यम् ॥ 15

211 संचिन्तयन्त्यखिलहेयविपक्षभूतं
शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं
निष्पन्दनन्दथुमयं भवतः स्वरूपम् ॥ 16

212 विश्वातिशायिसुखरूप यदात्मकस्त्वं
व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां
सा किं त्वमेव तव वेति वितर्कडोळाम् ॥ 17

213 मोहान्धकारविनिवर्तनजागरूके
दोषा दिवाऽपि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपते विमृष्टे
श्लाघ्येत संतमसपर्व सहस्रभानोः ॥ 18

214 रूढस्य चिन्मयतया हृदये करीश
स्तम्बानुकारिपरिणामविशेषभाजः ।
स्थानेषु जाग्रति चतुर्ष्वपि सत्त्ववन्तः
शाखाविभागचतुरे तव चातुरात्म्ये ॥ 19

215 नागाचलेश निखिलोपनिषन्मनीषा-
मञ्जूषिकामरकतं परिचिन्वतां त्वाम् ।
तन्वी हृदि स्फुरति काऽपि शिखा मुनीनां
सौदाम्नीव निभृता नवमेघगर्भा ॥ 20

216 औदन्वते महति सद्मनि भासमाने
श्लाघ्ये च दिव्यसदने तमसः परस्मिन् ।
अन्तःकळेबरमिदं सुषिरं सुसूक्ष्मं
जातं करीश कथमादरणास्पदं ते ॥ 21

217 बालाकृतेर्वटपलाशमितस्य यस्य
ब्रह्माण्डमण्डलमभूदुदरैकदेशे ।
तस्यैव तद्वरद हन्त कथं प्रभूतं
वाराहमास्थितवतो वपुरद्भुतं ते ॥ 22

218 भक्तस्य दानवशिशोः परिपालनाय
भद्रां नृसिंहकुहनामधिजग्मुषस्ते ।
स्तम्भैकवर्जमधुनाऽपि करीश नूनं
त्रैलोक्यमेतदखिलं नरसिंहगर्भम् ॥ 23

219 क्रामन् जगत् कपटवामनतामुपेतः
त्रेधा करीश स भवान् निदधे पदानि ।
अद्यापि जन्तव इमे विमलेन यस्य
पादोदकेन विधृतेन शिवा भवन्ति ॥ 24

220 येनाचलप्रकृतिना रिपुसंक्षयार्थी
वारां निधिं वरद पूर्वमलङ्घयस्त्वम् ।
तं वीक्ष्य सेतुमधुनाऽपि शरीरवन्तः
सर्वे षडूर्मिबहुळं जलधिं तरन्ति ॥ 25

221 इत्थं करीश दुरपह्नवदिव्यभव्य-
रूपान्वितस्य विबुधादिविभूतिसाम्यात् ।
केचिद्विचित्रचरितान् भवतोऽवतारान्
सत्यान् दयापरवशस्य विदन्ति सन्तः ॥ 26



222 सौशील्यभावितधिया भवता कथंचित्
संछादितानपि गुणान् वरद त्वदीयान् ।
प्रत्यक्षयन्त्यविकलं तव संनिकृष्टाः
पत्युस्त्विषामिव पयोदवृतान् मयूखान् ॥ 27

223 नित्यं करीश तिमिराविलदृष्टयोऽपि
सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि संचरतामदृश्यं
मायानिगूढमनपायमहानिधिं त्वाम् ॥ 28

224 सत्यस्त्यजन्ति वरद त्वयि बद्धभावाः
पैतामहादिषु पदेष्वपि भावबन्धम् ।
कस्मै खदेत सुखसंचरणोत्सुकाय
कारागृहे कनकशृङ्खलयाऽपि बन्धः ॥ 29

225 हरतीश दुःखविषदिग्धफलानुबन्धिनि
आब्रह्मकीटमपराहतसंप्रयोगे ।
दुष्कर्मसंचयवशात् दुरतिक्रमे नः
प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ॥ 30

226 त्वद्भक्तिपोतमवलम्बितुमक्षमाणा
पारं परं वरद गन्तुमनीश्वराणाम् ।
स्वैरं लिलङ्घयिषतां भववारिराशिं
त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥ 31

227 अश्रान्तसंसरणघर्मनिपीडितस्य
भ्रान्तस्य मे वरद भोगमरीचिकासु ।
जीवातुरस्तु निरवग्रहमेधमानः
देव त्वदीयकरुणामृतदृष्टिपातः ॥ 32

228 अन्तः प्रविश्य भगवन्नखिलस्य जन्तोः
आसेदुषस्तव करीश भृशं दवीयान् ।
सत्यं भवेयमधुनाऽपि स एव भूयः
स्वाभाविकी तव दया यदि नान्तरायः ॥ 33

229 अज्ञातनिर्गममनागमवेदिनं माम्
अन्धं न किञ्चिदवलम्बनमश्नुवानम् ।
एतावतीं गमयितुः पदवीं दयाळोः
शेषाध्वलेशनयने क इवातिभारः ॥ 34

230 भूयोऽपि हन्त वसतिर्यदि मे भवित्री
याम्यासु दुर्विषहवृत्तिषु यातनासु ।
सम्यक् भविष्यति ततः शरणागतानां
संरक्षितेति बिरुदं वरद त्वदीयम् ॥ 35

231 पर्याकुलं महति दुःखपयोनिधौ मां
पश्यन् करीश यदि जोषमवस्थितस्त्वम् ।
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं
पारे करिष्यति दया तव दुर्निवारा ॥ 36

232 किं वा करीश कृपणे मयि रक्षणीये
धर्मादिबाह्यसहकारिगवेषणेन ।
नन्वस्ति विश्वपरिपालनजागरूकः
संकल्प एव भवतो निपुणः सहायः ॥ 37

233 निर्यन्त्रणं परिणमन्ति न यावदेते
नीरन्ध्रदुष्कृतभवा दुरितप्ररोहाः ।
तावन्न चेत् त्वमुपगच्छसि शार्ङ्गधन्वा
शक्यं त्वयाऽपि न हि वारयितुं करीश ॥ 38



234 यावन्न पश्यति निकाममर्षणो मां
भ्रूभङ्गभीषणकराळमुखः कृतान्तः ।
तावत् पतन्तु मयि ते भगवन् दयाळोः
उन्निद्रपद्मकलिकामधुराः कटाक्षाः ॥ 39

235 स त्वं स एव रभसो भवदौपवाह्यः
चक्रं तदेव शितधारमहं च पाल्यः ।
साधारणे त्वयि करीश समस्तजन्तोः
मातङ्गमानुषभिदा न विशेषहेतुः ॥ 40

236 निर्वापयिष्यति कदा करिशैलधामन्
दुर्वारकर्मपरिपाकमहादवाग्निम् ।
प्राचीनदुःखमपि मे सुखयन्निव त्वत्-
पादारविन्दपरिचाररसप्रवाहः ॥ 41

237 मुक्तः स्वयं सुकृतदुष्कृतशृङ्खलाभ्याम्
अर्चिर्मुखैरधिकृतैरतिवाहिताध्वा ।
स्वच्छन्दकिङ्करतया भवतः करीश
स्वाभाविकं प्रतिलभेय महाधिकारम् ॥ 42

238 त्वं चेत् प्रसीदसि तवास्मि समीपतश्चेत्
त्वय्यस्ति भक्तिरनघा करिशैलनाथ ।
संसृज्यते यदि च दासजनस्त्वदीयः
संसार एष भगवन्नपवर्ग एव ॥ 43

239 आहूयमानमनपायविभूतिकामैः
आलोकलुप्तजगदान्ध्यमनुस्मरेयम् ।
आलोहितांशुकमनाकुलहेतिजालं
हैरण्यगर्भहयमेधहविर्भुजं त्वाम् ॥ 44

240 भूयो भूयः पुळकनिचितैरङ्गकैरेधमानाः
स्थूलस्थूलान् नयनमुकुळैर्बिभ्रतो बाष्पबिन्दून् ।
धन्याः केचिद्वरद भवतः संसदं भूषयन्तः
स्वान्तैरन्तर्विनयनिभृतैः स्वादयन्ते पदं ते ॥ 45

241 वरद तव विलोकयन्ति धन्याः
मरकतभूधरमातृकायमाणम् ।
व्यपगतपरिकर्मवारवाणं
मृगमदपङ्कविशेषनीलमङ्गम् ॥ 46

242 अनिभृतपरिरम्भैराहितामिन्दिरायाः
कनकवलयमुद्रां कण्ठदेशे दधानः ।
फणिपतिशयनीयादुत्थितस्त्वं प्रभाते
वरद सततमन्तर्मानसं संनिधेयाः ॥ 47

243 तुरगविहगराजस्यन्दनान्दोळिकादिषु
अधिकमधिकमन्यामात्मशोभां दधानम् ।
अनवधिकविभूतिं हस्तिशैलेश्वरं त्वाम्
अनुदिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥ 48

244 निरन्तरं निर्विशतस्त्वदीयम्
अस्पृष्टचिन्तापदमाभिरूप्यम् ।
सत्यं शपे वारणशैलनाथ
वैकुण्ठवासेऽपि न मेऽभिलाषः ॥ 49

245 व्यातन्वाना तरुणतुळसीदामभिः स्वामभिख्यां
मातङ्गाद्रौ मरकतरुचिं पुष्णती मानसे नः ।
भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैः
भूयः श्यामा भुवनजननी देवता संनिधत्ताम् ॥ 50



246 इति विहितमुदारं वेङ्कटेशेन भक्त्या
श्रुतिसुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरिविटङ्कस्थायिनः कल्पवृक्षात्
भवति फलमशेषं तस्य हस्तापचेयम् ॥ 51

श्रीवरदराजपञ्चाशत् समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्री-वैराग्यपञ्चकम् - 7

**श्रीमते निगमान्तमहादेशिकाय नमः**

**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥**

---

247 क्षोणीकोणशतांशपालनकलादुर्वारगर्वानल-
क्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनाधन्यान् न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयाळुः पुरा
धानामुष्टिमुचे कुचेलमुनये दत्ते स्म वित्तेशताम् ॥ 1

248 सिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृतिपूरकं किमु न धारकं सारसम् ।
अयत्नमलमल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥ 2

249 ज्वलतु जलधिक्रोडक्रीडत्कृपीडभवप्रभा-
प्रतिभटपटुज्वालामालाकुलो जठरानलः ।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका-
परिमळमुचा वाचा याचामहे न महीश्वरान् ॥ 3

250 दुरीश्वरद्वारबहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे
धनञ्जयस्यन्दनभूषणं धनम् ॥ 4

251 शरीरपतनावधि प्रभुनिषेवणापादनात्
अबिन्धनधनञ्जयप्रशमदं धनं दन्धनं ।
धनञ्जयविवर्धनं धनमुदूढगोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम् ॥ 5

252 नास्ति पित्राऽऽर्जितं किंचित् न मया किंचिदार्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥ 6

श्री-वैराग्यपञ्चकं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः

## श्री-शरणागतिदीपिका - 8

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

253 पद्मापतेः स्तुतिपदेन विपच्यमानं
पश्यन्त्विह प्रपदनप्रवणा महान्तः ।
मद्वाक्यसंवलितमप्यजहत्स्वभावं
मान्यं यतीश्वरमहानससंप्रदायम् ॥ 1

254 नित्यं श्रिया वसुधया च निषेव्यमाणं
निर्व्याजनिर्भरदयाभरितं विभाति ।
वेदान्तवेद्यमिह वेगवतीसमीपे
दीपप्रकाश इति दैवतमद्वितीयम् ॥ 2

255 दीपस्त्वमेव जगतां दयिता रुचिस्ते
दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम् ।
स्तव्यं स्तवप्रियमतः शरणोक्तिवश्यं
स्तोतुं भवन्तमभिलष्यति जन्तुरेषः ॥ 3

256 पद्माकरादुपगता परिषस्वजे त्वां
वेगासरिद्विहरणा कलशाब्धिकन्या ।
आहुस्तदाप्रभृति दीपसमावभासम्
आजानतो मरकतप्रतिमं वपुस्ते ॥ 4

257 स्वामिन् गभीरसुभगं श्रमहारि पुंसां
माधुर्यरम्यमनघं मणिभङ्गदृश्यम् ।
वेगान्तरे वितनुते प्रतिबिम्बशोभां
लक्ष्मीसरः सरसिजाश्रयमङ्कं ते ॥ 5

258 आविश्य धारयसि विश्वममुष्य यन्ता
शेषी श्रियः पतिरशेषतनुर्निदानम् ।
इत्यादिलक्षणगणैः पुरुषोत्तमं त्वां
जानाति यो जगति सर्वविदेष गीतः ॥ 6

259 विश्वं शुभाश्रयवदीश वपुस्त्वदीयं
सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः ।
सर्वे च वेदविधयस्त्वदनुग्रहार्थाः
सर्वाधिकस्त्वमिति तत्त्वविदस्तदाहुः ॥ 7

260 ज्ञानं बलं नियमनक्षमताऽथ वीर्यं
शक्तिश्च तेज इति ते गुणषट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मिन्
अन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ 8

261 दीपावभास दयया विधिपूर्वमेतत्
विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताः शरणयन्ति मुमुक्षवस्त्वाम्
आद्यं गुरुं गुरुपरंपरयाऽधिगम्यम् ॥ 9

262 सत्तास्थितिप्रयतनप्रमुखैरुपात्तं
स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीपप्रकाश तदिह त्वदवाप्तये त्वाम्
अव्याजसिद्धमनपायमुपायमाहुः ॥ 10



263 भोग्यं मुकुन्द गुणभेदमचेतनेषु
भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव ।
पाञ्चालिकाशुकविभूषणभोगदायी
सम्राडिवात्मसमया सह मोदसे त्वम् ॥ 11

264 त्वां मातरं च पितरं सहजं निवासं
सन्तः समेत्य शरणं सुहृदं गतिं च ।
निःसीमनित्यनिरवद्यसुखप्रकाशं
दीपप्रकाश सविभूतिगुणं विशन्ति ॥ 12

265 जन्तोरमुष्य जनने विधिशंभुदृष्टौ
रागादिनेव रजसा तमसा च योगः ।
द्वैपायनप्रभृतयस्त्वदवेक्षितानां
सत्त्वं विमुक्तिनियतं भवतीत्युशन्ति ॥ 13

266 कर्मस्वनादिविषमेषु समो दयालुः
स्वेनैव क्लृप्तमपदेशमवेक्षमाणः ।
स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द
स्वाभाविकं तव सुहृत्त्वमिदं गृणन्ति ॥ 14

267 निद्रायितान् निगमवर्त्मनि चारुदर्शी
प्रस्थानशक्तिरहितान् प्रतिबोध्य जन्तून् ।
जीर्णस्तनंधयजडान्धमुखानिवास्मान्
नेतुं मुकुन्द यतसे दयया सह त्वम् ॥ 15

268 भक्तिः प्रपत्तिरथ वा भगवन् तदुक्तिः
तन्निष्ठसंश्रय इतीव विकल्प्यमानम् ।
यं कंचिदेकमुपपादयता त्वयैव
त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ 16

269 नानाविधैरकपटैरजहत्स्वभावैः
अप्राकृतैर्निजविहारवशेन सिद्धैः ।
आत्मीयरक्षणविपक्षविनाशनार्थैः
संस्थापयस्यनघजन्मभिराद्यधर्मम् ॥ 17

270 निम्नोन्नतानि निखिलानि पदानि गाढं
मज्जन्ति ते महिमसागरशीकरेषु ।
नीरन्ध्रमाश्रयसि नीचजनान् तथाऽपि
शीलेन हन्त शिशिरोपवनेश्वर त्वम् ॥ 18

271 काशीवृकान्धकशरासनबाणगङ्गा-
संभूतिनामकृतिसंवदनाद्युदन्तैः ।
स्वोक्तयम्बरीषभयशापमुखैश्च शंभुं
त्वन्निघ्नमीक्षितवतामिह कः शरण्यः ॥ 19

272 क्वासौ विभुः क्व वयमित्युपसत्तिभीतान्
जन्तून् क्षणात् त्वदनुवृत्तिषु योग्ययन्ती ।
संप्राप्तसद्गुरुतनोः समये दयाळोः
आत्मावधिर्भवति संस्कृतधीः क्षणं ते ॥ 20

273 योग्यं यमैश्च नियमैश्च विधाय चित्तं
सन्तो जितासनतया स्ववशासुवर्गाः ।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां
ध्यात्वा समाधियुगळेन विलोकयन्ति ॥ 21

274 पद्मामिरामवदनेक्षणपाणिपादं
दिव्यायुधाभरणमाल्यविलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तः
सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ 22



275 मानातिलङ्घिसुखबोधमहाम्बुराशौ
मग्नास्त्रिसीमरहिते भवतः स्वरूपे ।
तापत्रयेण विहतिं न भजन्ति सन्तः
संसारघर्मजनितेन समाधिमन्तः ॥ 23

276 धीसंस्कृतान् विदधतामिह कर्मभेदान्
शुद्धं जिते मनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्मसक्तमनसामपि चापरेषां
सूते फलान्यभिमतानि भवान् प्रसन्नः ॥ 24

277 उद्वाहुभावमपहाय यथैव खर्वः
प्रांशुं फलार्थमभियाचति योगिचिन्त्य ।
एवं सुदुष्करमुपायगणं विहाय
स्थाने निवेशयति तस्य विचक्षणस्त्वाम् ॥ 25

278 नित्यालसार्हमभयं निरपेक्षमन्यैः
विश्वाधिकारमखिलाभिमतप्रसूतिम् ।
शिक्षाविशेषसुभगं व्यवसायसिद्धाः
सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् ॥ 26

279 त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः
कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन् भव स्वयमुपाय इतीरयन्तः
त्वय्यर्पयन्ति निजभारमपारशक्तौ ॥ 27

280 अर्थान्तरेषु विमुखानधिकारहानेः
श्रद्धाधनान् त्वदनुभूतिविलम्बभीतान् ।
दीपप्रकाश लभसे सुचिरात् कृतीव
न्यस्तात्मनस्तव पदे निभृतान् प्रपन्नान् ॥ 28

281 मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः
स्वाधिक्रियासमुचितैर्यदि वाऽन्यवाक्यैः ।
नाथ त्वदीयचरणौ शरणं गतानां
नैवायुतायुतकलाऽप्यपरैरवाप्या ॥ 29

282 दत्ताः प्रजा जनकवत् तव देशिकेन्द्रैः
पत्याऽभिनन्द्य भवता परिणीयमानाः ।
मध्ये सतां महितभोगविशेषसिद्ध्यै
माङ्गल्यसूत्रमिव बिभ्रति किंकरत्वम् ॥ 30

283 दिव्ये पदे नियतकिंकरताधिराज्यं
दातुं त्वदीयदयया विहिताभिषेकाः ।
आदेहपातमनघाः परिचर्यया ते
युञ्जानचिन्त्य युवराजपदं भजन्ति ॥ 31

284 त्वां पाञ्चरात्रिकनयेन पृथग्विधेन
वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः
प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ॥ 32

285 वर्णाश्रमादिनियतक्रमसूत्रबद्धा
भक्त्या यथार्हविनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयंगमा त्वाम्
आमोदयत्यनुपरागधियां सपर्या ॥ 33

286 ब्रह्मा गिरीश इतरेऽप्यमरा य एते
निर्धूय तान् निरयतुल्यफलप्रसूतीन् ।
प्राप्तुं तवैव पदपद्मयुगं प्रतीताः
पातिव्रतीं त्वयि वहन्ति परावरज्ञाः ॥ 34



287 नाथ त्वदिष्टविनियोगविशेषसिद्धं
शेषत्वसारमनपेक्ष्य निजं गुणज्ञाः ।
भक्तेषु ते वरगुणार्णव पारतन्त्र्यात्
दास्यं भजन्ति विपणिव्यवहारयोग्यम् ॥ 35

288 सद्भिस्त्वदेकशरणैर्नियतं सनाथाः
सर्पादिवत् त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चपुरंदराद्याः
कालं क्षिपन्ति भगवन् करणैरवन्ध्यैः ॥ 36

289 वागादिकं मनसि तत् पवने स जीवे
भूतेष्वयं पुनरसौ त्वयि तैः समेति ।
साधारणोत्क्रमणकर्म समाश्रितानां
यन्त्रा मुकुन्द भवतैव यथा यमादेः ॥ 37

290 सव्यान्ययोरयनयोर्निशि वासरे वा
संकल्पितायुरवधीन् सपदि प्रपन्नान् ।
हार्दः स्वयं निजपदे विनिवेशयिष्यन्
नाडीं प्रवेशयसि नाथ शताधिकां त्वम् ॥ 38

291 अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं
संवत्सरो मरुदशीतकरः शशाङ्कः ।
सौदामनी जलपतिर्वलजित् प्रजेशः
इत्यातिवाहिकसखो नयसि स्वकीयान् ॥ 39

292 त्वच्छेषवृत्त्यनुगुणैर्महितैर्गुणौघैः
आविर्भवत्यपृथगसिद्धनिजस्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोगमात्रे
साम्यं भजन्ति परमं भवता विमुक्ताः ॥ 40

293 इत्थं त्वदेकशरणैरनघैरवाप्ये
त्वत्किंकरत्वविभवे स्पृहयाऽपराध्यन् ।
आत्मा ममेति भगवन् भवतैव गीताः
वाचो निरीक्ष्य भरणीय इह त्वयाऽहम् ॥ 41

294 पद्मामहीप्रभृतिभिः परिभुक्तभूम्नः
का हानिरत्र मयि भोक्तरि ते भवित्री ।
दुष्येत् किमङ्घ्रितटिनी तव देवसेव्या
दुर्वारतर्षचपलेन शुनाऽवलीढा ॥ 42

295 सत्त्वानि नाथ विविधान्यभिसंजिघृक्षोः
संसारनाट्यरसिकस्य तवास्तु तृप्त्यै ।
प्रत्यक्पराङ्मुखमतेरसमीक्ष्यकर्तुः
प्राचीनसज्जनविडम्बनभूमिका मे ॥ 43

296 कर्तव्यमित्यनुकलं कलयाम्यकृत्यं
स्वामिन् अकृत्यमिति कृत्यमपि त्यजामि ।
अन्यद्व्यतिक्रमणजातमनन्तमर्थ-
स्थाने दया भवतु ते मयि सार्वभौमी ॥ 44

297 यं पूर्वमाश्रितजनेषु भवान् यथावत्
धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् ।
संस्मारितस्त्वमसि तस्य शरण्यभावात्
नाथ त्वदात्तसमया ननु मादृशार्थम् ॥ 45

298 त्राणं भवेति सकृदुक्तिसमुद्यतानां
तैस्तैरसह्यवृजिनैरुदरंभरिस्ते ।
सत्यापिता शतमखात्मजशंकरादौ
नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥ 46



299 कर्मादिषु त्रिषु कथां कथमप्यजानन्
कामादिमेदुरतया कलुषप्रवृत्तिः ।
साकेतसंभवचराचरजन्तुनीत्या
वीक्ष्यः प्रभो विषयवासितयाऽप्यहं ते ॥ 47

300 ब्रह्माण्डलक्षशतकोटिगणाननन्तान्
एकक्षणे विपरिवर्त्य विलज्जमानाम् ।
मत्पापराशिमथने मधुदर्पहन्त्रीं
शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ 48

301 आस्तां प्रपत्तिरिह देशिकसाक्षिका मे
सिद्धा तदुक्तिरनघा त्वदवेक्षितार्था ।
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं
पूर्णे मुकुन्द पुनरुक्त उपाय एषः ॥ 49

302 यद्वा मदर्थपरिचिन्तनया तवालं
संज्ञां प्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवादनिवृत्तये मां
पात्रीकुरुष्व भगवन् भवतः कृपायाः ॥ 50

303 त्यागे गुणेश शरणागतसंज्ञिनो मे
स्यानागसोऽपि सहसैव परिग्रहे वा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते
गूढं निरूपय गुणेतरतारतम्यम् ॥ 51

304 स्वामी दयाजलनिधिर्मधुरः क्षमावान्
शीलाधिकः श्रितवशः शुचिरत्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं
विख्यातिमन्ति बिरुदानि मया सहैव ॥ 52

305 वेलाधनंजयरथादिषु वाचिकैः स्वैः
आघोषितामखिलजन्तुशरण्यतां ते ।
जानन् दशाननशतादधिकागसोऽपि
पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ 53

306 रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्
वर्णानिमानहृदयानपि वाचयित्वा ।
मद्दोषनिर्जितगुणो महिषीसमक्षं
मा भूस्त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ 54

307 मुख्यं च यत् प्रपदनं स्वयमेव साध्यं
दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरणसङ्गवतीमवस्थां
पश्यन्नुपायफलयोरुचितं विधेयाः ॥ 55

308 अल्पास्थिरैरसुखजैरसुखावसानैः
दुःखान्वितैरनुचितैरभिमानमूलैः ।
प्रत्यक्परागनुभवैः परिघूर्णितं मां
त्वय्येव नाथ चरितार्थय निर्विविक्षुम् ॥ 56

309 तत्त्वावबोधशमितप्रतिकूलवृत्तिं
कैङ्कर्यलब्धकरणत्रयसामरस्यम् ।
कृत्वा त्वदन्यविमुखं कृपया स्वयं मां
स्फार्तिं दृशोः प्रतिलभस्व जगज्जनन्याः ॥ 57

310 इत्थं स्तुतिप्रभृतयो यदि संमताः स्युः
यद्वाऽपराधपदवीष्वभिसंविशन्ति ।
स्तोकानुकूल्यकणिकावशवर्तिनस्ते
प्रीतिक्षमाप्रसरयोरहमस्मि लक्ष्यम् ॥ 58



311 स्नेहोपपन्नविषयस्वदशाविशेषात्
भूयस्तमिस्त्रशमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगात्
दीपप्रकाशशरणागतिदीपिकाख्याम् ॥ 59

श्रीशरणागतिदीपिका समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्री-वेगासेतुस्तोत्रम् - 9

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

312 एकं वेगवतीमध्ये हस्तिशैले च दृश्यते ।
उपायफलभावेन स्वयं व्यक्तं परं महः ॥ 1

313 ईष्टे गमयितुं पारम् एष सेतुरभङ्गुरः ।
यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥ 2

314 जयति जगदेकसेतुः वेगवतीमध्यलक्षितो देवः ।
प्रशमयति यः प्रजानां प्रथितान् संसारजलधिकल्लोलान् ॥ 3

315 विभातु मे चेतसि विष्णुसेतुः वेगापगावेगविघातहेतुः ।
अम्भोजयोनेर्यदुपज्ञमासीत् अभङ्गरक्षा हयमेधदीक्षा ॥ 4

316 चतुराननसप्ततन्तुगोप्ता सरितं वेगवतीमसौ निरुन्धन् ।
परिपुष्यति मङ्गळानि पुंसां भगवान् भक्तिमतां यथोक्तकारी ॥ 5

317 श्रीमान् पितामहवधूपरिचर्यमाणः
शेते भुजङ्गशयने स महाभुजङ्गः ।
प्रत्यादिशन्ति भवसंचरणं प्रजानां
भक्तानुगन्तुरिह यस्य गतागतानि ॥ 6

318 प्रशमितहयमेधव्यापदं पद्मयोनेः
श्रितजनपरतन्त्रं शेषभोगे शयानम् ।
शरणमुपगताः स्मः शान्तनिःशेषदोषं
शतमखमणिसेतुं शाश्वतं वेगवत्याः ॥ 7

319 शरणमुपगतानां सोऽयमादेशकारी
शमयति परितापं संमुखः सर्वजन्तोः ।
शतगुणपरिणामः संनिधौ यस्य नित्यं
वरवितरणभूमा वारणाद्रीश्वरस्य ॥ 8

320 काञ्चीभाग्यं कमलनिलयाचेतसोऽभीष्टसिद्धिः
कल्याणानां निधिरविकलः कोऽपि कारुण्यराशिः ।
पुण्यानां नः परिणतिरसौ भूषयन् भोगिशय्यां
वेगासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥ 9

321 वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।
ये पठन्ति जनास्तेषां यथोक्तः कुरुते हरिः ॥ 10

श्री-वेगासेतुस्तोत्रं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः

# श्री-अष्टभुजाष्टकम् - 10

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

322 गजेन्द्ररक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः ।
अपारविज्ञानदयानुभावम् आप्तं सतामष्टभुजं प्रपद्ये ॥ 1

323 त्वदेकशेषोऽहमनात्मतन्त्रः त्वत्पादलिप्सां दिशता त्वयैव ।
असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि ॥ 2

324 स्वरूपरूपास्त्रविभूषणाद्यैः परत्वचिन्तां त्वयि दुर्निवाराम् ।
भोगे मृदूपक्रमतामभीप्सन् शीलादिभिर्वारयसीव पुंसाम् ॥ 3

325 शक्तिं शरण्यान्तरशब्दभाजां सारं च संतोल्य फलान्तराणाम् ।
त्वद्दास्यहेतोस्त्वयि निर्विशङ्कं न्यस्तात्मनां नाथ बिभर्षि भारम् ॥ 4

326 अभीतिहेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि ।
भयं कुतः स्यात् त्वयि सानुकम्पे रक्षा कुतः स्यात् त्वयि जातरोषे ॥ 5

327 त्वदेकतन्त्रं कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम् ।
त्वयि प्रवृत्ते मम किं प्रयासैः त्वय्यप्रवृत्ते मम किं प्रयासैः ॥ 6

328 समाधिभङ्गेष्वपि संपतत्सु शरण्यभूते त्वयि बद्धकक्ष्ये ।
अपत्रपे सोढुमकिञ्चनोऽहं दूराधिरोहं पतनं च नाथ ॥ 7

329 प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मानिषेव्ये तव पादपद्मे ।
आदेहपातादपराधदूरम् आत्मान्तकैङ्कर्यरसं विधेयाः ॥ 8

330 प्रपन्नजनपाथेयं प्रपित्सूनां रसायनम् ।
श्रेयसे जगतामेतत् श्रीमदष्टभुजाष्टकम् ॥ 9

331 शरणागतसंत्राणत्वराद्विगुणबाहुना ।
हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम् ॥ 10

श्री-अष्टभुजाष्टकं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्री-कामासिकाष्टकम् - 11

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

332 श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् ।
कामादधिवसन् जीयात् कश्चिदद्भुतकेसरी ॥ 1

333 तपनेन्द्वग्निनयनः तापानपचिनोतु नः ।
तापनीयरहस्यानां सारः कामासिकाहरिः ॥ 2

334 आकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम् ।
वेगोपकण्ठसङ्गात् विमुक्तवैकुण्ठबहुमतिमुपासे ॥ 3

335 बन्धुमखिलस्य जन्तोः बन्धुरपर्यङ्कबन्धरमणीयम् ।
विषमविलोचनमीडे वेगवतीपुलिनकेळिनरसिंहम् ॥ 4



336 स्वस्थानेषु मरुद्गणान् नियमयन् स्वाधीनसर्वेन्द्रियः
पर्यङ्कस्थिरधारणाप्रकटितप्रत्यङ्मुखावस्थितिः ।
प्रायेण प्रणिपेदुषां प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतादशेषजगतां कामासिकाकेसरी ॥ 5

337 विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थली-
निरर्गळविनिर्गळद्रुधिरसिन्धुसन्ध्यायिताः ।
अवन्तु मदनासिकामनुजपञ्चवक्त्रस्य माम्
अहंप्रथमिकामिथःप्रकटिताहवा बाहवः ॥ 6

338 सटापटलभीषणे सरभसाट्टहासोद्भटे
स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रे कृते ।
कृपा कपटकेसरिन् दनुजडिम्भदत्तस्तना
सरोजसदृशा दृशा व्यतिभिषज्य ते व्यज्यते ॥ 7

339 त्वयि रक्षति रक्षकैः किमन्यैः त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चितधीः श्रयामि नित्यं नृहरे वेगवतीतटाश्रय त्वाम् ॥ 8

340 इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः श्रीवेङ्कटेशरचितैस्त्रिदशेन्द्रवन्द्यः ।
दुर्दान्तघोरदुरितद्विरदेन्द्रभेदी कामासिकानरहरिर्वितनोतु कामान् ॥ 9

श्री-कामासिकाष्टकं समाप्तम्

---

**कवितार्किकसिंहाय कल्याणगुणशालिने ।**
**श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥**
**श्रीमते निगमान्तमहादेशिकाय नमः**

---

श्रीः

## श्री-परमार्थस्तुतिः - 12

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

341 श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे ।
यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ॥ 1

342 गुरुभिस्त्वदनन्यसर्वभावैः गुणसिन्धौ कृतसंप्लवस्त्वदीये ।
रणपुङ्गव वन्दिभावमिच्छन् अहमस्म्येकमनुग्रहास्पदं ते ॥ 2

343 भुवनाश्रयभूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु ।
वपुराहवपुङ्गव त्वदीयं महिषीणामनिमेषदर्शनीयम् ॥ 3

344 अभिरक्षितुमग्रतः स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः ।
अहितप्रशमैरयत्नलभ्यैः कथयन्त्याहवपुङ्गवं गुणज्ञाः ॥ 4

345 कमला निरपायधर्मपत्नी करुणाद्याः स्वयमृत्विजो गुणास्ते ।
अवनं श्रयतामहीनमाद्यं स च धर्मस्त्वदनन्यसेवनीयः ॥ 5

346 कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुङ्गव प्रपन्नाः ।
अपवर्गनयादनन्यभाव्याः वरिवस्यारसमेकमाद्रियन्ते ॥ 6

347 अवधीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्तजीवितः सन् ।
लभते भवतः फलानि जन्तुः निखिलान्यत्र निदर्शनं जटायुः ॥ 7

348 शरणागतरक्षणव्रती मां न विहातुं रणपुङ्गवार्हसि त्वम् ।
विदितं भुवने विभीषणो वा यदि वा रावण इत्युदीरितं ते ॥ 8



349 भुजगेन्द्रगरुत्मदादिलभ्यैः त्वदनुज्ञानुभवप्रवाहभेदैः ।
स्वपदे रणपुङ्गव स्वयं मे परिचर्याविभवैः परिष्क्रियेथाः ॥ 9

350 विमलाशयवेङ्कटेशजन्मा रमणीया रणपुङ्गवप्रसादात् ।
अनसूयुभिरादरेण भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः ॥ 10

श्री-परमार्थस्तुतिः समाप्ता

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीः

## श्री-देवनायकपञ्चाशत् - 13

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

351 प्रणतसुरकिरीटप्रान्तमन्दारमाला-
विगळितमकरन्दस्निग्धपादारविन्दः ।
पशुपतिविधिपूज्यः पद्मपत्रायताक्षः
फणिपतिपुरनाथः पातु मां देवनाथः ॥ 1

352 देवाधिनाथकमलापृतनेशपूर्वां
दीप्तान्तरां वकुळभूषणनाथमुख्यैः ।
रामानुजप्रभृतिभिः परिभूषिताग्र्यां
गोप्त्रीं जगन्ति गुरुपङ्क्तिमहं प्रपद्ये ॥ 2

353 दिव्ये दयाजलनिधौ दिविषन्नियन्तुः
तीर्थं निदर्शितवतस्त्रिजगन्निषेव्यम् ।
प्राचः कवीन् निगमसंमितसूनृतोक्तीन्
प्राचेतसप्रभृतिकान् प्रणमाम्यभीक्ष्णम् ॥ 3

354 मातस्त्वमम्बुरुहवासिनि किंचिदेतत्
विज्ञाप्यते मयि कुरुष्व तथा प्रसादम् ।
आकर्णयिष्यति यथा विबुधेश्वरस्ते
प्रेयानसौ पृथुकजल्पितवन्मदुक्तिम् ॥ 4

355 निर्विश्यमानविभवं निगमोत्तमाङ्गैः
स्तोतुं क्षमं मम च देवपते भवन्तम् ।
गावः पिबन्तु गणशः कलशाम्बुराशिं
किं तेन तर्णकगणास्तृणमाददानाः ॥ 5

356 अज्ञातसीमकमनन्तगरुत्मदाद्यैः
तं त्वां समाधिनियतैरपि सामि दृष्टम् ।
तुष्टूषतो मम मनोरथसिद्धिदायी
दासेषु सत्य इति धारय नामधेयम् ॥ 6

357 विश्राणयन् मम विशेषविदामनिन्द्याम्
अन्तर्वतीं गिरमहीन्द्रपुराधिराज ।
स्तव्यः स्तवप्रिय इतीव तपोधनोक्तं
स्तोतेति च त्वदभिधानमवन्ध्यय त्वम् ॥ 7

358 संरक्षणीयममराधिपते त्वयैव
दूरं प्रयातमपि दुस्त्यजगाढबन्धम् ।
आकृष्टवानसि भवाननुकम्पमानः
सूत्रानुबद्धशकुनिक्रमतः स्वयं माम् ॥ 8



359 व्यामोहिता विविधभोगमरीचिकाभिः
विश्रान्तिमद्य लभते विबुधैकनाथ ।
गम्भीरपूर्णमधुरं मम धीर्भवन्तं
ग्रीष्मे तटाकमिव शीतमनुप्रविष्टा ॥ 9

360 दिव्ये पदे जलनिधौ निगमोत्तमाङ्गे
स्वान्ते सतां सवितृमण्डलमध्यभागे ।
ब्रह्माचले च बहुमानपदे मुनीनां
व्यक्तिं तव त्रिदशनाथ वदन्ति नित्याम् ॥ 10

361 तीर्थैर्वृतं वृजिनदुर्गतिनाशनार्हैः
शेषक्षमाविहगराजविरिञ्चजुष्टैः ।
नाथ त्वया नतजनस्य भवौषधेन
प्रख्यातमौषधगिरिं प्रणमन्ति देवाः ॥ 11

362 स्वाधीनविश्वविभवं भगवन् विशेषात्
त्वां देवनायकमुशन्ति परावरज्ञाः ।
प्रायः प्रदर्शयितुमेतदिति प्रतीमः
त्वद्भक्तिभूषितधियामिह देवभावम् ॥ 12

363 तत्त्वानि यानि चिदचित्प्रविभागवन्ति
त्रय्यन्तवृद्धगणितानि सितासितानि ।
दीव्यन्ति तान्यहिपुरन्दरधामनाथ
दिव्यास्त्रभूषणतया तव विग्रहेऽस्मिन् ॥ 13

364 भूषायुधैरधिगतं निजकान्तिहेतोः
भुक्तं प्रियाभिरनिमेषविलोचनाभिः ।
प्रत्यङ्गपूर्णसुषमासुभगं वपुस्ते
दृष्ट्वा दृशौ विबुधनाथ न तृप्यतो मे ॥ 14

365 वेदेषु निर्जरपते निखिलेष्वधीतं
व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम् ।
अङ्गान्यमूनि भवतः सुभगान्यधीते
विश्वं विभो जनितवन्ति विरिञ्चपूर्वम् ॥ 15

366 देवेश्वरत्वमिह दर्शयितुं क्षमस्ते
नाथ त्वयाऽपि शिरसा विधृतः किरीटः ।
एकीकृतद्युमणिबिम्बसहस्रदीप्तिः
निर्मूलयन् मनसि मे निबिडं तमिस्रम् ॥ 16

367 मुग्धस्मितामृतशुभेन मुखेन्दुना ते
संगम्य संसरणसंज्वरशान्तये नः ।
संपद्यते विबुधनाथ समाधियोग्या
शर्वर्यसौ कुटिलकुन्तळकान्तिरूपा ॥ 17

368 बिम्बाधरं विकचपङ्कजलोचनं ते
लम्बाळकं ललितकुण्डलदर्शनीयम् ।
कान्तं मुखं कनककैतककर्णपूरं
स्वान्तं विभूषयति देवपते मदीयम् ॥ 18

369 लब्धा तिथौ क्वचिदियं रजनीकरेण
लक्ष्मीः स्थिरा सुरपते भवतो ललाटे ।
यत्स्वेदबिन्दुकणिकोद्गतबुद्बुदान्तः
त्र्यक्षः पुरा स पुरुषोऽजनि शूलपाणिः ॥ 19

370 लावण्यवर्षिणि ललाटतटे घनाभे
बिभ्रत् तटिद्गुणविशेषमिवोर्ध्वपुण्ड्रम् ।
विश्वस्य निर्जरपते तमसाऽऽवृतस्य
मन्ये विभावयसि माङ्गळिकप्रदीपम् ॥ 20



371 आहुः श्रुतिं विबुधनायक तावकीनाम्
आशागणप्रसवहेतुमधीतवेदाः ।
आकर्णिते तदियमार्तरवे प्रजानाम्
आशाः प्रसाधयितुमादिशति स्वयं त्वाम् ॥ 21

372 कन्दर्पलाञ्छनतनुस्त्रिदशैकनाथ
कान्तिप्रवाहरुचिरे तव कर्णपाशे ।
पुष्यत्यसौ प्रतिमुखस्थितिदर्शनीया
भूषामयी मकरिका विविधान् विहारान् ॥ 22

373 नेतुं सरोजवसतिर्निजमाधिराज्यं
नित्यं निशामयति देवपते भ्रुवौ ते ।
एवं न चेदखिलजन्तुविमोहनार्हा
किं मातृका भवति कामशरासनस्य ॥ 23

374 आलक्ष्यसत्त्वमतिवेलदयोत्तरङ्गम्
अभ्यर्थिनामभिमतप्रतिपादनार्हम् ।
स्निग्धायतं प्रथिमशालि सुपर्वनाथ
दुग्धाम्बुधेरनुकरोति विलोचनं ते ॥ 24

375 विश्वाभिरक्षणविहारकृतक्षणैस्ते
वैमानिकाधिप विडम्बितमुग्धपद्मैः ।
आमोदवाहिभिरनामयवाक्यगर्भैः
आर्द्रीभवाम्यमृतवर्षनिभैरपाङ्गैः ॥ 25

376 नित्योदितैर्निगमनिःश्वसितैस्तवैषा
नासा नभश्चरपते नयनाब्धिसेतुः ।
आम्रेडितप्रियतमामुखपद्मगन्धैः
आश्वासिनी भवति संप्रति मुह्यतो मे ॥ 26

377 आरुण्यपल्लवितयौवनपारिजातम्
आभीरयोषिदनुभूतममर्त्यनाथ ।
वंशेन शङ्खपतिना च निषेवितं ते
बिम्बाधरं स्पृशति रागवती मतिर्मे ॥ 27

378 पद्मालयावलयदत्तसुजातरेखे
त्वत्कान्तिमेचकितशङ्खनिभे मतिर्मे ।
विस्मेरभावरुचिरा वनमालिकेव
कण्ठे गुणीभवति देवपते त्वदीये ॥ 28

379 आजानुलम्बिभिरलङ्कृतहेतिजालैः
ज्याघातराजिरुचिरैर्जितपारिजातैः ।
चित्राङ्गदैस्त्रिदशपुङ्गव जातसङ्गा
त्वद्बाहुभिर्मम दृढं परिरभ्यते धीः ॥ 29

380 नीलाचलोदितनिशाकरभास्कराभे
शान्ताहिते सुरपते तव शङ्खचक्रे ।
पाणेरमुष्य भजतामभयप्रदस्य
प्रत्यायनं जगति भावयतः स्वभूम्ना ॥ 30

381 अक्षोभणीयकरुणाम्बुधिविद्रुमाभं
भक्तानुरञ्जनममर्त्यपते त्वदीयम् ।
नित्यापराधचकिते हृदये मदीये
दत्ताभयं स्फुरति दक्षिणपाणिपद्मम् ॥ 31

382 दुर्दान्तदैत्यविशिखक्षतपत्रभङ्गं
वीरस्य ते विबुधनायक बाहुमध्यम् ।
श्रीवत्सकौस्तुभरमावनमालिकाङ्कं
चिन्ताऽनुभूय लभते चरितार्थतां नः ॥ 32



383 वर्णक्रमेण विबुधेश विचित्रिताङ्गी
स्मेरप्रसूनसुभगा वनमालिकेयम् ।
हृद्या सुगन्धिरजहत्कमलामणीन्द्रा
नित्या तव स्फुरति मूर्तिरिव द्वितीया ॥ 33

384 आर्द्रं तमोमथनमाश्रिततारकं ते
शुद्धं मनः सुमनसाममृतं दुहानम् ।
तत्तादृशं विबुधनाथ समृद्धकामं
सर्गेष्विदं भवति चन्द्रमसां प्रसूतिः ॥ 34

385 विश्वं निगीर्य विबुधेश्वर जातकार्श्यं
मध्यं वलित्रयविभाव्यजगद्विभागम् ।
आमोदिनाभिनलिनस्थविरिञ्चभृङ्गम्
आकल्पयत्युदरबन्ध इवाशयो मे ॥ 35

386 नाकौकसां प्रथमतामधिकुर्वते ते
नाभीसरोजरजसां परिणामभेदाः ।
आराधयद्भिरिह तैर्भवतः समीची
वीरोचिता विबुधनायक इत्यभिख्या ॥ 36

387 पीताम्बरेण परिवारवती सुजाता
दास्ये निवेशयति देवपते दृशौ मे ।
विन्यस्तसव्यकरसङ्गमजायमान-
रोमाञ्चरम्यकिरणा रशना त्वदीया ॥ 37

388 स्त्रीरत्नकारणमुपात्ततृतीयवर्णं
दैत्येन्द्रवीरशयनं दयितोपधानम् ।
देवेश यौवनगजेन्द्रकराभिरामम्
ऊरीकरोति भवदूरुयुगं मनो मे ॥ 38

389 लावण्यपूरललितोर्ध्वपरिभ्रमाभं
लक्ष्मीविहारमणिदर्पणबद्धसख्यम् ।
गोपाङ्गणेषु कृतचङ्क्रमणं तवैतत्
जानुद्वयं सुरपते न जहाति चित्तम् ॥ 39

390 दूत्ये दुकूलहरणे व्रजसुन्दरीणां
दैत्यानुधावनविधावपि लब्धसाह्यम् ।
कन्दर्पकाहळनिषङ्गकळाचिकाभं
जङ्घायुगं जयति देवपते त्वदीयम् ॥ 40

391 पाषाणनिर्मिततपोधनधर्मदारं
भस्मन्युपाहितनरेन्द्रकुमारभावम् ।
संवाहितं त्रिदशनाथ रमामहीभ्यां
सामान्यदैवतमुशन्ति पदं त्वदीयम् ॥ 41

392 आवर्जिताभिरनुषज्य निजांशुजालैः
देवेश दिव्यपदपद्मदळायिताभिः ।
अन्याभिलाषपरिलोलमिदं मदीयम्
अङ्गीकृतं हृदयमङ्गुळिभिः स्वयं ते ॥ 42

393 पङ्क्त्यन्यसौ मम निहन्ति महस्तरङ्गैः
गङ्गाधिकां विदधती गरुडस्रवन्तीम् ।
नाकौकसां मणिकिरीटगणैरुपास्या
नाथ त्वदीयपदयोर्नखरत्नपङ्क्तिः ॥ 43

394 वज्रध्वजाङ्कुशसुधाकलशातपत्र-
कल्पद्रुमाम्बुरुहतोरणशङ्खचक्रैः ।
मत्स्यादिभिश्च विबुधेश्वर मण्डितं ते
मान्यं पदं भवतु मौळिविभूषणं नः ॥ 44



395 चित्रं त्वदीयपदपद्मपरागयोगात्
योगं विनाऽपि युगपद्विलयं प्रयान्ति ।
विष्वञ्चि निर्जरपते शिरसि प्रजानां
वेधःस्वहस्तलिखितानि दुरक्षराणि ॥ 45

396 ये जन्मकोटिभिरुपार्जितशुद्धधर्माः
तेषां भवच्चरणभक्तिरतीव भोग्या ।
त्वज्जीवितैस्त्रिदशनायक दुर्लभैस्तैः
आत्मानमप्यकथयः स्वयमात्मवन्तम् ॥ 46

397 निष्किञ्चनत्वधनिना विबुधेश येन
न्यस्तः स्वरक्षणभरस्तव पादपद्मे ।
नानाविधप्रथितयोगविशेषधन्याः
नार्हन्ति तस्य शतकोटितमांशकक्ष्याम् ॥ 47

398 आत्मापहाररसिकेन मयैव दत्तम्
अन्यैरधार्यमधुना विबुधैकनाथ ।
स्वीकृत्य धारयितुमर्हसि मां त्वदीयं
चोरोपनीतनिजनूपुरवत् स्वपादे ॥ 48

399 अज्ञानवारिधिमपायधुरंधरं मां
आज्ञाविभञ्जनमकिञ्चनसार्वभौमम् ।
विन्दन् भवान् विबुधनाथ समस्तवेदी
किं नाम पात्रमपरं मनुते कृपायाः ॥ 49

400 प्रह्लादगोकुलगजेन्द्रपरीक्षिदाद्याः
त्रातास्त्वया ननु विपत्तिषु तादृशीषु ।
सर्वं तदेकमपरं मम रक्षणं ते
संतोल्यतां त्रिदशनायक किं गरीयः ॥ 50

401 वात्याशतैर्विषयरागतया विवृत्तैः
व्याघूर्णमानमनसं विबुधाधिराज ।
नित्योपतप्तमपि मां निजकर्मघर्मैः
निर्वेशय स्वपदपद्ममधुप्रवाहम् ॥ 51

402 जय विबुधपते त्वं दर्शिताभीष्टदानः
सह सरसिजवासामेदिनीभ्यां वशाभ्याम् ।
नळवनमिव मृद्नन् पापराशिं नतानां
गरुडसरिदनूपे गन्धहस्तीव दीव्यन् ॥ 52

403 निरवधिगुणजातं नित्यनिर्दोषमाद्यं
नरकमथनदक्षं नाकिनामेकनाथम् ।
विनतविषयसत्यं वेङ्कटेशः कविस्त्वां
स्तुतिपदमधिगच्छन् शोभते सत्यवादी ॥ 53

श्रीदेवनायकपञ्चाशत् समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः

## श्री अच्चुअसअअम

## श्री - अच्युतशतकम् - 14

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

सिरिवेङ्कडणाहज्जो कइतक्किअसीहसव्वतन्तसतन्तो ।
वेअन्तारिअवज्जो मह सण्णिज्झेउ सइ सअं हिअअम्मि ॥
श्रीवेङ्कटनाथार्यः कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रः ।
वेदान्ताचार्यवर्यो मम संनिधत्तां सदा स्वयं हृदये ॥

---

404 णमह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइम् ।
गरुलणइतडतमालं अहिन्दणअरोसहाअलेक्कगइन्दम् ॥ 1
नमत त्रिदशानां नाथं सत्यं दासानामच्युतं स्थिरज्योतिः ।
गरुडनदीतटतमालं अहीन्द्रनगरौषधाचलैकगजेन्द्रम् ॥ 1

405 किंकरसच्च थुई तुह सअम्भुगेहिणिविलासवाहित्तमई ।
फणिआ बालेण मए पञ्जरसुअजप्पिअं व कुणउ पसाअम् ॥ 2
किङ्करसत्य स्तुतिस्तव स्वयंभूगेहिनीविलासव्याहृतमयी ।
फणिता बालेन मया पञ्जरशुकजल्पितमिव करोतु प्रसादम् ॥ 2

406 मइलं वि भासिअं मह किंकरसच्च तुह कित्तिजोण्हापसरे ।
लग्गं लहउ विसुद्धिं रच्छासलिलं व तिवहआसोत्तगअम् ॥ 3
मलिनमपि भाषितं मम किङ्करसत्य तव कीर्तिज्योत्स्नाप्रसरे ।
लग्नं लभतां विशुद्धिं रथ्यासलिलमिव त्रिपथगास्रोतोगतम् ॥ 3

407 तत्थरिणएण ठविआ सोहउ तिअसाण णाह तुज्झ समाए ।
वन्दित्तणमहिआणं मज्झम्मि सुईण बालिसा मज्झ थुई ॥ 4

त्रस्तरिनयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे ।
वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ॥ 4

408 अम्हगुरूणं अच्चुअ जीहासीहासणम्मि लद्धपइट्ठो ।
पडिवाइअपरमठो वारेसि अपण्डिअत्तणं अम्हाणम् ॥ 5

अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः ।
प्रतिपादितपरमार्थो वारयस्यपण्डितत्वमस्माकम् ॥ 5

409 हिअएसु देसिआणं जण्हइलहरीसु पुण्णचन्दो व्व फुडो ।
कलुसजलेसु व हंसो कसाअकबुरेसु ठासि अच्चुअ ण खणम् ॥ 6

हृदयेषु देशिकानां जाह्नवीलहरीषु पूर्णचन्द्र इव स्फुटः ।
कलुषजलेष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत न क्षणम् ॥ 6

410 आअममेत्तपमाणो आगोविअणं पआसणिअमाहप्पो ।
सद्दहिअहिअअसुलहो दूरं मुअसि णअसच्च डोलाअन्ते ॥ 7

आगममात्रप्रमाणः आगोपीजनं प्रकाशनिजमाहात्म्यः ।
श्रद्धितहृदयसुलभो दूरं मुञ्चसि नतसत्य दोलायमानान् ॥ 7

411 सइ खविअसअलहेअं सरणागअसच्च सच्चणाणाणन्दम् ।
उल्लङ्घिअतिविहन्तं उवणिसआणं सआइ गाअन्ति तुमम् ॥ 8

सदा क्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् ।
उल्लङ्घितत्रिविधान्तम् उपनिषदां शतानि गायन्ति त्वाम् ॥ 8



412 कुणसि ण कीरसि केण वि ठावेसि ण संठविज्जसि अणण्णठिओ ।
हरसि णिहिलं ण हीरसि अहिन्दणअरिन्द अणहजोइफुरन्तो ॥ 9

करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः ।
हरसि निखिलं न ह्रियसे अहीन्द्रनगरेन्द्रानघज्योतिः स्फुरन् ॥ 9

413 अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइवहुत्ता ।
तेण पडिवत्थुपुण्णो सुव्वसि अपडिहअणिअठिई सव्वगओ ॥ 10

अणुप्रमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रभूता ।
तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहतनिजस्थितिः सर्वगतः ॥ 10

414 सअलाण धरणणिअमणसामित्तणणिअमसंठिओ सव्वतणू ।
सुव्वसि अच्चुअ सव्वो सअ दंसिअकज्जकारणत्तणकबुरो ॥ 11

सकलानां धरणनियमनस्वामित्वनियमसंस्थितः सर्वतनुः ।
श्रूयसेऽच्युत सर्वः स्वयं दर्शितकार्यकारणत्वकर्बुरः ॥ 11

415 पुरिसपहाणसरीरो भुवणाणं होसि अच्चुअ उवाआणम् ।
णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥ 12

पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसंकल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥ 12

416 विसमगुणङ्कुरपअरे जलं व सामण्णकारणं तुह केळी ।
णिअकम्मसत्तिणिअआ अच्चुअ बम्हाइठावरन्तविसेसा ॥ 13

विषमगुणाङ्कुरप्रकरे जलमिव सामान्यकारणं तव केळिः ।
निजकर्मशक्तिनियताः अच्युत ब्रह्मादिस्थावरान्तविशेषाः ॥ 13

417 पुरिसा तुज्झ विहूई अच्चुअ लच्छीअ इत्थिआसण्णाओ ।
णत्थि परं तुज्झाणं सा वि सिरी होइ तुज्झ किं उण इअरम् ॥ 14

पुरुषास्तव विभूतिः अच्युत लक्ष्म्याः स्त्रीसंज्ञाः ।
नास्ति परं युवयोः साऽपि श्रीर्भवति तव किं पुनरितरत् ॥ 14

418 ण हु तुह सरिसब्भहिआ णाह तुमं एव्व सव्वलोअसरण्णो ।
एआव णाणसारं इअ मुणिउं तिअसणाह इअरविइन्ता ॥ 15

न खलु तव सदृशाभ्यधिकाः नाथ त्वमेव सर्वलोकशरण्यः ।
एतावत् ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतरविचिन्ता ॥ 15

419 भाइ फणिन्दउराहिव पडिवालेन्तेसु पाअडवहुत्तफला ।
अवि दुहिणप्पमुहेहिं आणत्ती तुह अलङ्घणिज्जपहावा ॥ 16

भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकटप्रभूतफला ।
अपि द्रुहिणप्रमुखैः आज्ञप्तिस्तवालङ्घनीयप्रभावा ॥ 16

420 णिअमविहीण पउत्ती सव्वाण वि दाससच्च उद्दिसिअ तुमम् ।
सद्धणिमन्तिअबम्हणसमाहिसिद्धं लहन्ति तिअसा भुत्तिम् ॥ 17

निगमविधीनां प्रवृत्तिः सर्वेषामपि दाससत्योद्दिश्य त्वाम् ।
श्राद्धनिमन्त्रितब्राह्मणसमाधिसिद्धां लभन्ते त्रिदशा भुक्तिम् ॥ 17

421 आरज्झतिअसविलए अच्चुअ णिच्चं ण ठासि जइ णाम तुमम् ।
कम्माण कप्पिआणं काहिइ कप्पन्तरेसु को णिव्वेसम् ॥ 18

आराध्यत्रिदशविलये अच्युत नित्यं न तिष्ठसि यदि नाम त्वम् ।
कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम् ॥ 18



422 कप्पेसि कंखिआइं कप्पदुमो व्व सिरिकञ्चणलआसहिओ ।
णअसच्च सइ फलाइं णिअछाहिणिहिण्णणिच्चतावतिहुवणो ॥ 19

कल्पयसि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः ।
नतसत्य सदा फलानि निजच्छायानिर्भिन्ननित्यतापत्रिभुवनः ॥ 19

423 सअलाअमाण णिट्ठा सअलसुराण वि अन्तरो अप्पाणो ।
सअलफलाण पसूई सअलजणाणं समो खु णअसच्च तुमम् ॥ 20

सकलागमानां निष्ठा सकलसुराणामभ्यन्तर आत्मा ।
सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥ 20

424 इअ सव्वाण समाणो सच्चठिओ दाससच्च सइ परिपुण्णो ।
किह वहसि पक्खवाअं पण्डवपमुहेसु पेसणं वि सहन्तो ॥ 21

इति सर्वेषां समानः सत्यस्थितो दाससत्य सदा परिपूर्णः ।
कथं वहसि पक्षपातं पाण्डवप्रमुखेषु प्रेषणमपि सहमानः ॥ 21

425 विसमम्मि कम्ममग्गे विपरिखलन्ताण वीहलिअकरणाणम् ।
णाह णिहिळाण अण्णो णत्थि तुमाहि णअसच्च हत्थालम्बो ॥ 22

विषमे कर्ममार्गे विपरिस्खलतां विह्वलितकरणानाम् ।
नाथ निखिलानामन्यो नास्ति त्वत् नतसत्य हस्तालम्बः ॥ 22

426 णाणस्स को अविसओ अच्चुअ कलुणाअ तुज्झ को दूरठिओ ।
सत्तीअ को अइभरो ता खु उवाओ तुमं चिअ सअं सिद्धो ॥ 23

ज्ञानस्य कोऽविषयः अच्युत करुणायास्तव को दूरस्थितः ।
शक्तेः कोऽतिभरः तस्मात् खलूपायस्त्वमेव स्वयं सिद्धः ॥ 23

427 संकप्पकण्णहारो किंकरसच्च भवसाअरे अइगहिरे ।
अणहो तुमं खु पोओ अप्पाण किवासमीरणेण पउत्तो ॥ 24

संकल्पकर्णधारः किङ्करसत्य भवसागरेऽतिगभीरे ।
अनघस्त्वं खलु पोतः आत्मनां कृपासमीरणेन प्रयुक्तः ॥ 24

428 अच्चुअ ण दन्ति मोक्खं ईसरभावेण भाविआ इअरसुरा ।
रत्तिं परिवट्टेउं लक्खं आलेक्खदिणअराण वि ण खमम् ॥ 25

अच्युत न ददति मोक्षं ईश्वरभावेन भाविता इतरसुराः ।
रात्रिं परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ॥ 25

429 अमिअरससाअरस्स व अहिन्दउरणाह णिम्मलमहग्घाइम् ।
तीरन्ति ण विगणेउं अणण्णसुलहाइ तुज्झ गुणरअणाइम् ॥ 26

अमृतरससागरस्येव अहीन्द्रपुरनाथ निर्मलमहार्घाणि ।
शक्नुवन्ति न विगणयितुम् अनन्यसुलभानि तव गुणरत्नानि ॥ 26

430 भूसिअसुइसीमन्तो भुअइन्दउरेस सव्वगुणसीमन्तो ।
खविअतिसामळमोहो मुणीण हिअएसु फुरसि सामळमोहो ॥ 27

भूषितश्रुतिसीमन्तो भुजगेन्द्रपुरेश सर्वगुणसीमान्तः ।
क्षपिततृषामलमोहो मुनीनां हृदयेषु स्फुरसि श्यामळमयूखः ॥ 27

431 सुहलक्खणसिरिवच्छो सोहसि णिम्मुत्तविरहखणसिरिवच्छो ।
रणदेवणसविहगओ उद्धणगल्लुलणइतीरवणसविहगओ ॥ 28

शुभलक्षणश्रीवत्सः शोभसे निर्मुक्तविरहक्षणश्रीवत्सः ।
रणदेवनसविधगतः उद्भटगरुडनदीतीरवनसविधगजः ॥ 28



432 अकुमारजोव्वणठिअं अहिन्दउरणाह अहिमअं अणुरूवम् ।
णिच्चं सहावसिद्धं सुव्वइ सूरिमहिअं सुहं तुह रूवम् ॥ 29

अकुमारयौवनस्थितम् अहीन्द्रपुरनाथाभिमतमनुरूपम् ।
नित्यं स्वभावसिद्धं श्रूयते सूरिमहितं सुखं तव रूपम् ॥ 29

433 तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअमगणिज्जन्ता ।
अत्था तुह खु समत्ता परम्मि रूवम्मि भूसणत्थसरूवा ॥ 30

त्रिगुणं तस्य विकारा अच्युत पुरुष इत्यागमगण्यमानाः ।
अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्रस्वरूपाः ॥ 30

434 णिन्ति तुमाओ अच्चुअ णिक्खविअविवक्खणिट्ठुरपरक्कमणा ।
संठविअपरमधम्मा साहुपरित्ताणसप्फला ओआरा ॥ 31

गच्छन्ति त्वत्तोऽच्युत निक्षपितविपक्षनिष्ठुरपराक्रमणाः ।
संस्थापितपरमधर्माः साधुपरित्राणसत्फला अवताराः ॥ 31

435 हरिमणिसरिच्छणिअरुइहरिआअन्तभुअइन्दवुरपेरन्तो ।
काले दासजणाणं कण्हघणो होसि दिण्णकालुण्णरसो ॥ 32

हरिमणिसदृक्षनिजरुचिहरितायमानभुजगेन्द्रपुरपर्यन्तः ।
काले दासजनानां कृष्णघनो भवसि दत्तकारुण्यरसः ॥ 32

436 गल्लुलणइकच्छरण्णे लक्खिज्जसि लच्छिमहिकरेणुमणहरो ।
दीसन्तबहुळदाणो दिसागइन्दो व्व खुडिअदणुइन्ददुमो ॥ 33

गरुडानदीकच्छारण्ये लक्ष्यसे लक्ष्मीमहीकरेणुमनोहरः ।
दृश्यमानबहुळदानो दिशागजेन्द्र इव खण्डितदनुजेन्द्रद्रुमः ॥ 33

437 मुहचन्दमोळिदिणअरमज्झठिओ तुज्झ चिहुरभारन्धारो ।
अघडिअघडणासत्तिं सच्चं ठावेइ दासंसच्च समग्गम् ॥ 34

मुखचन्द्रमौळिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः ।
अघटितघटनाशक्तिं सत्यं स्थापयति दाससत्य समग्राम् ॥ 34

438 परिहसिअपुण्णचन्दं पदुमसरिच्छप्पसण्णलोअणजुअळम् ।
संकप्पिअदुरिआइ वि संहरिअं हरइ दाससच्च तुह मुहम् ॥ 35

परिहसितपूर्णचन्द्रं पद्मसदृक्षप्रसन्नलोचनयुगळम् ।
संकल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥ 35

439 माहप्पं तुह महिअं मङ्गळिअं तुळसिकोत्थुहप्पमुहाणम् ।
अच्चुअ ठिरवणमालं वच्छं दंसेइ लच्छिलक्खणसुहअम् ॥ 36

माहात्म्यं तव महितं माङ्गळिकं तुलसीकौस्तुभप्रमुखाणाम् ।
अच्युत स्थिरवनमालं वत्सं दर्शयति लक्ष्मीलक्षणसुभगम् ॥ 36

440 णिव्विसइ णिन्ततावो देवअणो देवणाअअ विहिप्पमुहो ।
सीअळसन्दवहुत्तं छाहिं तुह विउळबाहुकप्पदुमाणम् ॥ 37

निर्विशति गच्छत्तापो देवजनो देवनायक विधिप्रमुखः ।
शीतळसान्द्रप्रभूतां छायां तव विपुलबाहुकल्पद्रुमाणाम् ॥ 37

441 संकप्पचन्दखोहिअतिउणोअहिविउळबुब्बुअप्पअरेहिम् ।
बम्हण्डेहि वि भरिअं किङ्करसच्च तुह कीस णु किसं उअरम् ॥ 38

संकल्पचन्द्रक्षोभितत्रिगुणोदधिविपुलबुद्बुदप्रकरैः ।
ब्रह्माण्डैरपि भरितं किंकरसत्य तव कस्मान्नु कृशमुदरम् ॥ 38



442 णाहिरुहं तुह णळिणं भुअईसरणअरणाह सोहइ सुहअम् ।
मज्झठिअबम्हभमरं वच्छासणलच्छिपाअवीढसरिच्छम् ॥ 39

नाभिरुहं तव नळिनं भुजगेश्वरनगरनाथ शोभते सुभगम् ।
मध्यस्थितब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठसदृक्षम् ॥ 39

443 दिढपीडिअमहुकइढवसोणिअपडलपरिपाडलम्बरघडिआ ।
राअइ अच्चुअ मुहला रइणाहगइन्दसिंकला तुह रसणा ॥ 40

दृढपीडितमधुकैटभशोणितपटलपरिपाटलाम्बरघटिता ।
राजत्यच्युत मुखरा रतिनाथगजेन्द्रशृङ्खला तव रशना ॥ 40

444 दासाण सच्च दीसइ दाणववीराण दीहणिद्दासअणम् ।
तुह उअरट्ठिअतिहुवणपासाअक्खम्भसच्छअं ऊरुजुअम् ॥ 41

दासानां सत्य दृश्यते दानववीराणां दीर्घनिद्राशयनम् ।
तवोदरस्थितत्रिभुवनप्रासादस्तम्भसच्छायमूरुयुगम् ॥ 41

445 जाणुमणिदप्पणेण अ जङ्घामरगअकळाइआए अ धणिआ ।
अच्चुअ ण मुअइ कन्ती लच्छी व सरोअलञ्छणे तुह चलणे ॥ 42

जानुमणिदर्पणेन च जङ्घामरकतकळाचिकया च धन्या ।
अच्युत न मुञ्चति कान्तिर्लक्ष्मीरिव सरोजलाञ्छनौ तव चरणौ ॥ 42

446 सुइसीमन्तपसूणं सोहइ णअसच्च तुज्झ सव्वसरणणम् ।
कमणखणजणिअसुरणइपसमिअतेल्लोक्कपाअअं पअपदुमम् ॥ 43

श्रुतिसीमन्तप्रसूनं शोभते नतसत्य तव सर्वशरण्यम् ।
क्रमणक्षणजनितसुरनदीप्रशमितत्रैलोक्यपातकं पदपद्मम् ॥ 43

447 इअ तिहुवणेक्कमूलं आसादेन्ति अणहा अमिअसाउरसम् ।
ओसहिमहिहरपासे उइअं तुं ओसहिं व दासरुआणम् ॥ 44

इति त्रिभुवनैकमूलम् आस्वादयन्त्यनघा अमृतस्वादुरसम् ।
ओषधिमहीधरपार्श्वे उदितं त्वामौषधिमिव दासरुजाम् ॥ 44

448 सिद्धञ्जणं व सामं तुज्झ तणुं णिअविलोअणेसु खिवन्ता ।
अच्चुअ लच्छिणिवासं णिच्चणिऊढं णिहिं व पेच्छन्ति तुमम् ॥ 45

सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः ।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ॥ 45

449 विहडिअणिबिडन्धारो घडन्तजोई तिलोअएक्कगहवई ।
दिट्ठिगओ जाण तुमं णमन्तसच्च ण हु ताण मोहतिआमा ॥ 46

विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः ।
दृष्टिगतो येषां त्वं नमत्सत्य न खलु तेषां मोहत्रियामा ॥ 46

450 विसअरसम्मि विरत्ता विआरजणणेहि वि ण हु विकीरन्ता ।
जीवन्तमुक्कसरिसा अच्चुअ दीसन्ति पावणा तुह भत्ता ॥ 47

विषयरसे विरक्ताः विकारजननैरपि न खलु विक्रियमाणाः ।
जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥ 47

451 गन्धव्वणअरसिमिणअसारिच्छाणं सिरीण वणसरिआणम् ।
ण सुमरइ तुम्हगहिओ सरणागअसच्च सइमओ जीवगओ ॥ 48

गन्धर्वनगरस्वप्नसदृक्षाणां श्रीणां वनसरिताम् ।
न स्मरति त्वद्गृहीतः शरणागतसत्य सदामदो जीवगजः ॥ 48



452 ण महेन्ति णाणवन्ता तरङ्गडिण्डीरबुब्बुअसरिच्छाइम् ।
विहिपमुहाण पआइं घणकन्दळिकन्दकअळिखम्भसमाइम् ॥ 49

न महयन्ति ज्ञानवन्तः तरङ्गडिण्डीरबुद्बुदसदृक्षाणि ।
विधिप्रमुखाणां पदानि घनकन्दळिकन्दकदळीस्तम्भसमानि ॥ 49

453 पुळइअसपरसहावा पुरिसा घेत्तूण सामिणो तुह सीळम् ।
णाह णअसच्च सघिणा ण मुअन्ति कहं वि सव्वजणसोहद्दम् ॥ 50

दृष्टस्वपरस्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम् ।
नाथ नतसत्य सघृणाः न मुञ्चन्ति कथमपि सर्वजनसौहार्दम् ॥ 50

454 माणमएसामच्छलडम्भासूआभआमरिसलोहमुहा ।
दीसन्ति ण मोहसुआ दोसा दासाण सच्च तुह भत्ताणम् ॥ 51

मानमदेर्ष्यामत्सरदम्भासूयाभयामर्षलोभमुखाः ।
दृश्यन्ते न मोहसुता दोषा दासानां सत्य तव भक्तानाम् ॥ 51

455 जाण मई इअरमुही काळो सअळो वि ताण कलिवित्थारो ।
जे तुह पअम्मि पवणा णत्थि कली णाअवइणअरवए ताणम् ॥ 52

येषां मतिरितरमुखी कालः सकलोऽपि तेषां कलिविस्तारः ।
ये तव पदे प्रवणा नास्ति कलिर्नागपतिनगरपते तेषाम् ॥ 52

456 अच्चासण्णविणासा अच्चुअ पेच्छन्ति तावए भत्तजणे ।
मोक्खरुईण सुमग्गे मूढा दिअहअरमण्डलम्मि व छिद्दम् ॥ 53

अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने ।
मोक्षरुचीनां सुमार्गे मूढा दिवसकरमण्डल इव च्छिद्रम् ॥ 53

457 णितुडिअदुम्माणघणा णिम्मलगुणघडिअतारआपब्भारा ।
भासन्तभत्तिजोण्हा णअसच्च फुरन्ति णहणिहा तुह भत्ता ॥ 54

नित्रुटितदुर्मानघना निर्मलगुणघटिततारकाप्राग्भाराः ।
भासमानभक्तिज्योत्स्ना नतसत्य स्फुरन्ति नभोनिभास्तव भक्ताः ॥ 54

458 ण हु जमविसअम्मि गई णअसच्च पअम्बुअं तुह पवण्णाणम् ।
खलिआण वि जहजोग्गं सिक्खा सुद्धन्तकिङ्कराण व लहुई ॥ 55

न खलु यमविषये गतिः नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्तकिङ्कराणामिव लघ्वी ॥ 55

459 कम्मगइदोसदुहिआ कअन्तभिउडीभुअङ्गिदंसणतत्था ।
अच्चन्ति तुज्झ चळणे अच्चुअ पब्भट्ठवम्महरसासाआ ॥ 56

कर्मगतिदोषदुःखिताः कृतान्तभ्रुकुटीभुजङ्गीदर्शनत्रस्ताः ।
अर्चन्ति तव चरणौ अच्युत प्रभ्रष्टमन्मथरसास्वादाः ॥ 56

460 आलग्गइ तुह चलणे अच्चुअ विहिणा वि अच्चणा आअरिआ ।
जा एक्कन्तिपउत्ता सेसं व सअं सिरेण पडिग्गेण्हसि तम् ॥ 57

आलगति तव चरणौ अच्युत विधिनाऽप्यर्चनाऽऽचरिता ।
यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥ 57

461 तुह मुहजोण्हादाविअमाणससिअन्तपवहसंणिहबा हे ।
अच्चुअ ण मुअसि भत्ते कळम्बगोळणिहकण्टअन्तणिअङ्गे ॥ 58

तव मुखज्योत्स्नाद्रावितमानसशशिकान्तप्रवाहसंनिभबाष्पान् ।
अच्युत न मुञ्चसि भक्तान् कदम्बगोळनिभकण्टकायमाननिजाङ्गान् ॥ 58



462 सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअसासअधम्मा ।
गअसङ्गा तुह भत्ता जन्ति तुमं एव्व दुल्लहं इअरेहिम् ॥ 59

सर्वेष्वपि निर्वैराः शरणागतसत्य गृहीतशाश्वतधर्माः ।
गतसङ्गास्तव भक्ताः यान्ति त्वामेव दुर्लभमितरैः ॥ 59

463 अहिवइणअरिन्द तुमं आसण्णं वि गअणं व सइ दुग्गेज्झम् ।
विसएसु विलग्गन्ता तूरन्ता वि ण लहन्ति डोलन्तमणा ॥ 60

अहिपतिनगरेन्द्र त्वाम् आसन्नमपि गगनमिव सदा दुर्ग्राह्यम् ।
विषयेषु विलगन्तः त्वरमाणा अपि न लभन्ते डोलायमानमनसः ॥ 60

464 भत्ता तावअसेवारसभरिआ सअलरक्खणोसुअरुइणा ।
करणाइ धरन्ति चिरं कङ्खिअमोक्खा वि अच्चुअ तुए ठविआ ॥ 61

भक्तास्तावकसेवारसभरिताः सकलरक्षणोत्सुकरुचिना ।
करणानि धरन्ति चिरं काङ्क्षितमोक्षा अप्यच्युत त्वया स्थापिताः ॥ 61

465 ठिरगुणगिरिजणिएहिं संतारेसि णअसच्च णिअभत्तेहिम् ।
जम्मपरिवाडिजलहिं जङ्गमठिरसेउदंसणिज्जेहि जणे ॥ 62

स्थिरगुणगिरिजनितैः संतारयसि नतसत्य निजभक्तैः ।
जन्मपरिपाटिजलधिं जङ्गमस्थिरसेतुदर्शनीयैर्जनान् ॥ 62

466 पसमिअभवन्तरभआ पत्तं पत्तं हिअं ति परिपेच्छन्ता ।
भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्छिमदिअहम् ॥ 63

प्रशमितभवान्तरभयाः प्राप्तं प्राप्तं हितमिति परिपश्यन्तः ।
भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥ 63

467 पअडतिमिरम्मि भुवणे पत्तपडिट्ठाविअपरमणाणपईवा ।
णिज्जन्ति अच्चुअ तुए णिअं पअं सइ सअंपहं कअकज्जा ॥ 64

प्रकटतिमिरे भुवने पात्रप्रतिष्ठापितपरमज्ञानप्रदीपाः ।
नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयंप्रभं कृतकार्याः ॥ 64

468 दिढतिव्वभत्तिणअणा परिपेच्छन्ता अहिन्दउरणाह तुमम् ।
पत्ता तुह साउज्जं पन्तिं पूरेन्ति पण्णइन्दमुहाणम् ॥ 65

दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथ त्वाम् ।
प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥ 65

469 संणअसुलहं अच्चुअ समाहिसोवाणकमविळम्बविमुहिआ ।
सरणं गन्तूण तुमं मुत्ता मुउउन्दखत्तबन्धुप्पमुहा ॥ 66

संनतसुलभमच्युत समाधिसोपानक्रमविळम्बविमुखिताः ।
शरणं गत्वा त्वां मुक्ता मुचुकुन्दक्षत्त्रबन्धुप्रमुखाः ॥ 66

470 देवाण पसुसमाणो जन्तू गन्तूण देवणाह तुह पअम् ।
तेहिं चिअ सव्वेहिं संसरमाणेहि होइ सइ दिण्णबळी ॥ 67

देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तव पदम् ।
तैरेव सर्वैः संसरमाणैर्भवति सदा दत्तबलिः ॥ 67

471 मोहन्धारमहण्णवमुच्छिअमाआमहारअणिपच्चूहो ।
अच्चुअ तुज्झ कडक्खो विमुत्तिपत्थाणपुडमपरिअरबन्धो ॥ 68

मोहान्धकारमहार्णवमूर्छितमायामहारजनिप्रत्यूषः ।
अच्युत तव कटाक्षो विमुक्तिप्रस्थानप्रथमपरिकरबन्धः ॥ 68



472 मोक्खसुहरुक्खमूलं मोहजराउरमहारसाअणपवरम् ।
सअलकुसलेक्कखेत्तं किंकरसच्च तुह कित्तणं अमिअणिहम् ॥ 69

मोक्षसुखवृक्षमूलं मोहजरातुरमहारसायनप्रवरम् ।
सकलकुशलैकक्षेत्रं किंकरसत्य तव कीर्तनममृतनिभम् ॥ 69

473 णत्थि अहिक्कमणासो विच्छेअम्मि वि ण पच्चवायपसङ्गो ।
सप्पा वि तुह सपज्जा रक्खइ अच्चुअ महत्तरादु भआदो ॥ 70

नास्त्यभिक्रमनाशो विच्छेदेऽपि न प्रत्यवायप्रसङ्गः ।
स्वल्पाऽपि तव सपर्या रक्षत्यच्युत महत्तराद्भयात् ॥ 70

474 अपसाए अपसण्णा तुज्झ पसाअम्मि दाससच्च पसण्णा ।
आरज्झा होन्ति परे किं तेहि पसङ्गलम्भिअपहावेहिम् ॥ 71

अप्रसादे अप्रसन्नाः तव प्रसादे दाससत्य प्रसन्नाः ।
आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भितप्रभावैः ॥ 71

475 इअरतिअसा पसण्णा किंकरसच्च मह किं णु काहिन्ति हिअम् ।
णीहारघणसएहिं ण हु पूरिज्जइ कहं वि चाअअतिण्हा ॥ 72

इतरत्रिदशाः प्रसन्नाः किंकरसत्य मम किं नु करिष्यन्ति हितम् ।
नीहारघनशतैर्न खलु पूर्यते कथमपि चातकतृष्णा ॥ 72

476 अणुगअसुहमिअतिण्हा अच्चुअ वीसमइ तुज्झ मामअतिण्हा ।
पवहेसु पसरिआए आसिअपवहन्तघणकिवासरिआए ॥ 73

अनुगतसुखमृगतृष्णा अच्युत विश्राम्यति तव मामकतृष्णा ।
प्रवाहेषु प्रसृताया आश्रितप्रवहद्घनकृपासरितः ॥ 73

477 विअलसअलङ्कविसमे धम्मे णअसच्च धअणिहे धारेन्तो ।
कन्तारपन्थओ विअ खळन्तचळनोम्हि काअरविसीरन्तो ॥ 74

विकलसकलाङ्कविषमान् धर्मान् नतसत्य ध्वजनिभान् धारयन् ।
कान्तारपान्थक इव स्खलच्चरणोऽस्मि कातरविशीर्यमाणः ॥ 74

478 ठिरधम्मवम्मथइअं अधम्मपवणाण अग्गखन्धपउत्तम् ।
अघडन्तविपडिसारं अच्चुअ मं हससि णूण लच्छिसमक्खम् ॥ 75

स्थिरधर्मवर्मस्थगितम् अधर्मप्रवणानामग्रस्कन्धप्रवृत्तम् ।
अघटमानविप्रतीसारम् अच्युत मां हससि नूनं लक्ष्मीसमक्षम् ॥ 75

479 तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्कदिअहे वि कअम् ।
काळो अळं ण सअळो कळुणाए तुज्झ पुण्णपत्तं म्हि इमो ॥ 76

तरितुमच्युत दुरितम् अस्मिन् देह एकदिवसेऽपि कृतम् ।
कालोऽलं न सकलः करुणायास्तव पूर्णपात्रमस्म्ययम् ॥ 76

480 अच्चुअ तुज्झ गुणाणं मह दोसाणं वि णत्थि कुत्थ वि गणणा ।
तह वि जओ पुढमाणं अहिअं लीणाण होइ ण हु दोब्बळ्ळम् ॥ 77

अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना ।
तथाऽपि जयः प्रथमानाम् अधिकं लीनानां भवति न खलु दौर्बल्यम् ॥77

481 रत्तिं दिअहं अच्चुअ तुडिअपडन्ताइ आउदुमखण्डाइम् ।
दट्ठूण वि दरिअमणं बालं एण्हिं वि भरसु मं अपमत्तो ॥ 78

रात्रिं दिवसमच्युत त्रुटितपतन्त्यायुर्द्रुमखण्डानि ।
दृष्ट्वाऽपि दृप्तमनसं बालमिदानीमपि भरस्व मामप्रमत्तः ॥ 78



482 णीसाससंकणिज्जे देहे पडळन्तसलिलबिन्दुसरिच्छे ।
मुणसि णअसच्च तुं मं जरन्तकरणे वि दीहजोव्वणतिण्हम् ॥ 79

निश्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुसदृक्षे ।
जानासि नतसत्य त्वं मां जरत्करणेऽपि दीर्घयौवनतृष्णम् ॥ 79

483 अमुणिअणिअकाअव्वं तिळग्गमुणिएसु मं वि पडिऊळगइम् ।
इअ णिअसहावविळिअं हाउं दासाण सच्च णहु तुह जुत्तम् ॥ 80

अज्ञातनिजकर्तव्यं यदृच्छाज्ञातेषु मामपि प्रतिकूलगतिम् ।
इति निजस्वभावव्रीडितं हातुं दासानां सत्य न खलु तव युक्तम् ॥ 80

484 कोहं किं करणिज्जं परिहरणिज्जं वि किंति जाणसि सव्वम् ।
तीरसि अ तं हिअं मह तिअसेसर कुणसु णिअहिअअणिक्खित्तम् ॥ 81

कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् ।
शक्नोषि च तद्धितं मम त्रिदशेश्वर कुरुष्व निजहृदयनिक्षिप्तम् ॥ 81

485 एण्हिं उवरिं वि इमो गुणगहिओ दारुपुत्तओ व परवसो ।
तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुहसंकप्पो ॥ 82

इदानीमुपर्यप्ययं गुणगृहीतो दारुपुत्रक इव परवशः ।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुखसंकल्पः ॥ 82

486 णिअकम्मणिअळजुअळं अच्चुअ काऊण मह पिअप्पिअवग्गे ।
काहे घोरकळेवरकाराघरकुहरणिग्गअं काहिसि मम् ॥ 83

निजकर्मनिगळयुगळम् अच्युत कृत्वा मम प्रियाप्रियवर्गे ।
कदा घोरकळेबरकारागृहकुहरनिर्गतं करिष्यसि माम् ॥ 83

487 हद्दे तुमम्मि कइआ विस्समिअं बम्हधमणिमग्गणिहिन्तम् ।
दिणअरदिण्णग्गकरं अच्चुअ दच्छिहिसि दइअडिम्भं विअ मम् ॥ 84

हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनिमार्गगमिष्यन्तम् ।
दिनकरदत्ताग्रकरम् अच्युत द्रक्ष्यसि दयितडिम्भमिव माम् ॥ 84

488 काहे अमाणवन्ता अग्गिमुहा आइवाहिआ तुह पुरिसा ।
अइळङ्घेहिन्ति मिमं अच्चुअ तमगहणतिउणमरुकन्तारम् ॥ 85

कदा अमानवान्ता अग्निमुखा आतिवाहिकास्तव पुरुषाः ।
अतिलङ्घयिष्यन्ति माम् अच्युत तमोगहनत्रिगुणमरुकान्तारम् ॥ 85

489 लङ्घिअविरआसरिअं लम्भिअसइसुद्धसत्तमअसोम्मतणुम् ।
कअबम्हालङ्कारं काहिसि णअसच्च किङ्करं काहे मम् ॥ 86

लङ्घितविरजासरितं लम्भितसदाशुद्धसत्त्वमयसौम्यतनुम् ।
कृतब्रह्मालङ्कारं करिष्यसि नतसत्य किङ्करं कदा माम् ॥ 86

490 संसारसाअराओ उक्खित्तं तिअसणाह फुरिआलोअम् ।
काहे काहिसि हिअए कोत्थुहमणिदप्पणं व लच्छिपुळइअम् ॥ 87

संसारसागरादुक्षिप्तं त्रिदशनाथ स्फुरितालोकम् ।
कदा करिष्यसि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मीपुलकितम् ॥ 87

491 काहे तुह पअपउमे होहिमि णअसच्च केळिकन्ततिहुवणे ।
मअणरिउमउडमण्डणसुरसरिआसोत्तसूइअमहुप्पवहे ॥ 88

कदा तव पदपद्मे भविष्यामि नतसत्य केळिक्रान्तत्रिभुवने ।
मदनरिपुमकुटमण्डनसुरसरित्स्रोतःसूचितमधुप्रवाहे ॥ 88



492 उवणिसआसिरकुसुमं उत्तंसेऊण तुह पअम्बुअजुअळम् ।
दइओ होहिमि कइआ दासो दासाण सच्च सूरिसरिच्छो ॥ 89

उपनिषच्छिरःकुसुमम् उत्तंस्य तव पदाम्बुजयुगळम् ।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥ 89

493 अउणोणिउत्तिजोग्गं ऽ ओआरविहारसहअरत्तणधणिअम् ।
अप्पसमभोअमेत्तं अणुहोहिसि देवणाह काहे णु मिमम् ॥ 90

अपुनर्निवृत्तियोग्यम् अवतारविहारसहचरत्वधन्यम् ।
आत्मसमभोगमात्रं अनुभविष्यसि देवनाथ कदा नु माम् ॥ 90

494 इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वसअम् ।
कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सइ सच्छन्दो ॥ 91

इति स्फुटमनोरथं माम् एतादृशवचनमात्रसारं वशगम् ।
कुरुष्व निजगुणगणैः सत्यं दासानां सत्य सदा स्वच्छन्दः ॥ 91

495 बाळपवगोव्व तरळो मारुइजाइत्ति साअरं तरिउमणो ।
पत्थेमि तुमं अच्चुअ कङ्खिअपअपउम खमसु मह कावेअम् ॥ 92

बालप्लवग इव तरळो मारुतिजातिरिति सागरं तरितुमनाः ।
प्रार्थये त्वामच्युत काङ्क्षितपदपद्म क्षमस्व मम कापेयम् ॥ 92

496 अच्चुअ विसअक्कन्तं भवण्णवावत्तभमिणिबुड्डन्तम् ।
जणणी थणंधअं विअ मं उद्धरिऊण सेवसु सअं पच्छम् ॥ 93

अच्युत विषयाक्रान्तं भवार्णवावर्तभ्रमिनिमज्जन्तम् ।
जननी स्तनंधयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥ 93

497 कम्ममअघम्मतविअं सुहमिअतिण्हाहि काहि वि अतण्णाअम् ।
कारेसु णिव्वुअं मं करआसिसिरेहि अच्चुअ कडक्खेहिम् ॥ 94

कर्ममयघर्मतप्तं सुखमृगतृष्णाभिः काभिरप्यनार्द्रम् ।
कारयस्व निर्वृतं मां कराशिशिरैरच्युत कटाक्षैः ॥ 94

498 तुह चिन्तणविमुहाणं दिट्ठिविसाणं व दंसणाउ मोएन्तो ।
अमिअमुहाणं विअ मं अच्चुअ भत्ताण णेसु णअणासारम् ॥ 95

तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मोचयन् ।
अमृतमुखानामिव मां अच्युत भक्तानां गमय नयनासारम् ॥ 95

499 विसमिळिअमहुणिहेसु अ तणपडिमेसु अ पडिग्गहेसु पळुठिअम् ।
अमिअणिहिम्मि व अच्चुअ ठावेसु तुमम्मि णिम्ममं मह हिअअम् ॥ 96

विषमिळितमधुनिभेषु च तृणप्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् ।
अमृतनिधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम् ॥ 96

500 णिच्चं इमम्मि किवणे णिक्खिव णमन्त सच्च णिहिसारिच्छे ।
पवहन्तणहपहाझरपसमिअपणमन्तसंजरे तुह चलणे ॥ 97

नित्यमस्मिन् कृपणे निक्षिप नमत्सत्य निधिसदृक्षौ ।
प्रवहन्नखप्रभाझरप्रशमितप्रणमत्संज्वरौ तव चरणौ ॥ 97

501 सरणागओत्ति जणिए जणवाए वि जइ अच्चुअ ण रक्खसि मम् ।
होज्ज खु साअरघोसो साअरपुळिणम्मि तारिसं तुह वअणम् ॥ 98

शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम् ।
भवेत् खलु सागरघोषः सागरपुळिने तादृशं तव वचनम् ॥ 98



502 णिक्खित्तो म्हि अ अगई णिवुणेहि तुमम्मि णाह कारुणिएहिम् ।
ते तुह दट्ठूण पिए णिहुअं णअसच्च भरसु अप्पाण भरम् ॥ 99

निक्षिप्तोऽस्मि चागतिः निपुणैस्त्वयि नाथ कारुणिकैः ।
तांस्तव दृष्ट्वा प्रियान् निभृतं नतसत्य भरस्वात्मनो भरम् ॥ 99

503 णअसच्च पक्कणाणिअगळिअकिलाअभमणिअकुमारं व णिवो ।
होज्जन्तजोव्वणवहुं वरोव्व मं लहसु मन्तिअणविण्णविअम् ॥ 100

नतसत्य पक्कणानीतगळितकिरातभ्रमनिजकुमारमिव नृपः ।
भविष्यद्यौवनवधूं वर इव मां लभस्व मन्त्रिजनविज्ञापितम् ॥ 100

504 इअ कइतक्किअकेसरिवेअन्ताआरिअवेङ्कडेसविरइअम् ।
सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ समग्गगुणम् ॥ 101

इति कवितार्किककेसरिवेदान्ताचार्यवेङ्कटेशविरचितम् ।
सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥ 101

**श्री अच्युतशतकं समाप्तम्**

---

**कवितार्किकसिंहाय कल्याणगुणशालिने ।**
**श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥**

**श्रीमते निगमान्तमहादेशिकाय नमः**

---

श्रीः

## श्री-महावीरवैभवम् - 15

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

जयत्याश्रितसंत्रासध्वान्तविध्वंसनोदयः ।
प्रभावान् सीतया देव्या परमव्योमभास्करः ॥

1 जय जय महावीर !

2 महाधीर धौरेय !

3 देवासुर समर समय समुदित निखिल निर्जर निर्धारित निरवधिक-माहात्म्य !

4 दशवदन दमित दैवत परिषदभ्यर्थित दाशरथि भाव !

5 दिनकर कुल कमल दिवाकर !

6 दिविषदधिपति रण सहचरण चतुर दशरथ चरमऋण विमोचन !

7 कोसल सुता कुमार भाव कञ्चुकित कारणाकार !

8 कौमार केळि गोपायित कौशिकाध्वर !

9 रणाध्वर धुर्य भव्य दिव्यास्त्र बृन्द वन्दित !

10 प्रणत जन विमत विमथन दुर्ललित दोर्ललित !

11 तनुतर विशिख विताडन विघटित विशरारु शरारु ताटका ताटकेय !



12 जडकिरण शकलधर जटिल नटपति मकुट तट नटनपटु विबुधसरि-दतिबहुळ मधुगळन ललितपद नळिनरज उपमृदित निजवृजिन जहदुपल तनुरुचिर परम मुनिवर युवति नुत !

13 कुशिक सुत कथित विदित नव विविध कथ !

14 मैथिल नगर सुलोचना लोचन चकोर चन्द्र !

15 खण्डपरशु कोदण्ड प्रकाण्ड खण्डन शौण्ड भुजदण्ड !

16 चण्डकर किरण मण्डल बोधित पुण्डरीक वन रुचि लुण्टाक लोचन !

17 मोचित जनक हृदय शङ्कातङ्क !

18 परिहृत निखिल नरपति वरण जनक दुहितृ कुचतट विहरण समुचित करतल !

19 शतकोटि शतगुण कठिन परशुधर मुनिवर करधृत दुरवनमतम निज धनुराकर्षण प्रकाशित पारमेष्ठ्य !

20 क्रतुहर शिखरि कन्तुक विहृत्युन्मुख जगदरुन्तुद जितहरि दन्ति दन्त दन्तुर दशवदन दमन कुशल दशशतभुज मुख नृपतिकुल रुधिर झर भरित पृथुतर तटाक तर्पित पितृक भृगुपति सुगति विहतिकर नत परुडिषु परिघ !

21 अनृत भय मुषित हृदय पितृ वचन पालन प्रतिज्ञावज्ञात यौवराज्य !

22 निषाद राज सौहृद सूचित सौशील्य सागर !

23 भरद्वाज शासन परिगृहीत विचित्र चित्रकूट गिरि कटक तट रम्यावसथ !

24 अनन्यशासनीय !

25 प्रणत भरत मकुटतट सुघटित पादुकाग्र्याभिषेक निर्वर्तित सर्व लोक योग क्षेम !

26 पिशित रुचि विहित दुरित वलमथन तनय बलिभुगनुगति सरभस शयन तृण शकल परिपतन भय चकित सकल सुर मुनिवर बहुमत महास्त्र सामर्थ्य !

27 द्रुहिण हर वलमथन दुरारक्ष शरलक्ष !

28 दण्डका तपोवन जङ्गम पारिजात !

29 विराध हरिण शार्दूल !

30 विलुळित बहुफल मख कलम रजनिचर मृग मृगयारम्भ संभृत चीरभृदनुरोध !

31 त्रिशिरः शिरस्त्रितय तिमिर निरास वासरकर !

32 दूषण जलनिधि शोषण तोषित ऋषिगण घोषित विजय घोषण !

33 खरतर खर तरु खण्डन चण्ड पवन !

34 द्विसप्त रक्षःसहस्र नळवन विलोलन महाकलभ !

35 असहाय शूर !

36 अनपाय साहस !

37 महित महामृथ दर्शन मुदित मैथिली दृढतर परिरम्भण विभव विरोपित विकट वीरव्रण !

38 मारीच माया मृग चर्म परिकर्मित निर्भर दर्भास्तरण !



39 विक्रम यशो लाभ विक्रीत जीवित गृध्रराज देह दिधक्षा लक्षित भक्तजन दाक्षिण्य !

40 कल्पित विबुधभाव कबन्धाभिनन्दित !

41 अवन्ध्य महिम मुनिजन भजन मुषित हृदय कलुष शबरी मोक्ष साक्षिभूत !

42 प्रभञ्जन तनय भावुक भाषित रञ्जित हृदय !

43 तरणिसुत शरणागति परतन्त्रीकृत स्वातन्त्र्य !

44 दृढघटित कैलास कोटि विकट दुन्दुभि कङ्काळ कूट दूर विक्षेप दक्ष दक्षिणेतर पादाङ्गुष्ठ दरचलन विश्वस्त सुहृदाशय !

45 अतिपृथुल बहु विटपि गिरि धरणि विवर युगपदुदय विवृत चित्रपुङ्ख वैचित्र्य !

46 विपुल भुज शैलमूल निबिड निपीडित रावण रणरणक जनक चतुरुदधि विहरण चतुर कपिकुलपति हृदय विशाल शिलातल दारण दारुण शिलीमुख !

47 अपार पारावार परिखा परिवृत परपुर परिसृत दव दहन जवन पवनंभव कपिवर परिष्वङ्ग भावित सर्वस्व दान !

48 अहित सहोदर रक्षः परिग्रह विसंवादि विविध सचिव विस्रम्भण समय संरम्भ समुज्जृम्भित सर्वेश्वर भाव !

49 सकृत् प्रपन्न जन संरक्षण दीक्षित !

50 वीर !

51 सत्यव्रत !

52 प्रतिशयन भूमिका भूषित पयोधि पुळिन !

53 प्रळय शिखि परुष विशिख शिखा शोषिताकूपार वारिपूर !

54 प्रबल रिपु कलह कुतुक चटुल कपिकुल करतल तूलित हृत गिरि निकर साधित सेतुपथ सीमा सीमन्तित समुद्र !

55 द्रुतगति तरुमृग वरूथिनी निरुद्ध लङ्कावरोध वेपथु लास्य लीलोपदेश देशिक धनुर्ज्याघोष !

56 गगन चर कनक गिरि गरिम धर निगममय निज गरुड गरुदनिल लव गळित विष वदन शर कदन !

57 अकृतचर वनचर रणकरण वैलक्ष्य कूणिताक्ष बहुविध रक्षो बलाध्यक्ष वक्षः कवाट पाटन पटिम साटोप कोपावलेप !

58 कटुरटद् अटनि टङ्कृति चटुल कठोर कार्मुक विनिर्गत विशङ्कट विशिख विताडन विघटित मकुट विह्वल विश्रवस्तनय विश्रम समय विश्राणन विख्यात विक्रम !

59 कुम्भकर्ण कुलगिरि विदळन दम्भोळि भूत निःशङ्क कङ्कपत्र !

60 अभिचरण हुतवह परिचरण विघटन सरभस परिपतद् अपरिमित कपिबल जलधि लहरि कलकलरव कुपित मघवजि दभिहनन-कृदनुज साक्षिक राक्षस द्वन्द्वयुद्ध !

61 अप्रतिद्वन्द्व पौरुष !

62 त्र्यम्बक समधिक घोरास्त्राडम्बर !

63 सारथि हृत रथ सत्रप शात्रव सत्यापित प्रताप !

64 शित शर कृत लवन दशमुख मुख दशक निपतन पुनरुदय दर गळित जनित दर तरळ हरिहय नयन नळिनवन रुचि खचित खतल निपतित सुरतरु कुसुम वितति सुरभित रथ पथ !



65 अखिल जगदधिक भुज बल वर बल दश लपन लपन दशक लवन जनित कदन परवश रजनिचर युवति विलपन वचन समविषय निगम शिखर निकर मुखर मुख मुनि वर परिपणित !

66 अभिगत शतमख हुतवह पितृपति निर्ऋति वरुण पवन धनद गिरिश मुख सुरपति नुति मुदित !

67 अमित मति विधि विदित कथित निज विभव जलधि पृषत लव !

68 विगत भय विबुध परिबृढ विबोधित वीरशयन शायित वानर पृतनौघ !

69 स्व समय विघटित सुघटित सहृदय सहधर्म चारिणीक !

70 विभीषण वशंवदीकृत लङ्कैश्वर्य !

71 निष्पन्न कृत्य !

72 ख पुष्पित रिपु पक्ष !

73 पुष्पक रभस गति गोष्पदीकृत गगनार्णव !

74 प्रतिज्ञार्णव तरण कृत क्षण भरत मनोरथ संहित सिंहासनाधिरूढ !

75 स्वामिन् !

76 राघव सिंह !

77 हाटक गिरि कटक लडह पाद पीठ निकट तट परिलुठित निखिल नृपति किरीट कोटि विविध मणि गण किरण निकर नीराजित चरण राजीव !

78 दिव्यभौमायोध्याधिदैवत !

79 पितृ वध कुपित परशु धर मुनि विहित नृप हनन कदन पूर्व काल प्रभव शत गुण प्रतिष्ठापित धार्मिक राजवंश !

80 शुभ चरित रत भरत खर्वित गर्व गन्धर्व यूथ गीत विजय गाथा शत !

81 शासित मधुसुत शत्रुघ्न सेवित !

82 कुश लव परिगृहीत कुल गाथा विशेष !

83 विधिवश परिणमदमर भणिति कविवर रचित निज चरित निबन्धन निशमन निर्वृत !

84 सर्व जन संमानित !

85 पुनरुपस्थापित विमान वर विश्राणन प्रीणित वैश्रवण विश्रावित यशःप्रपञ्च !

86 पञ्चतापन्न मुनिकुमार संजीवनामृत !

87 त्रेतायुग प्रवर्तित कार्तयुग वृत्तान्त !

88 अविकल बहुसुवर्ण हयमख सहस्र निर्वहण निर्वर्तित निज वर्णाश्रमधर्म !

89 सर्व कर्म समाराध्य !

90 सनातन धर्म !

91 साकेत जनपद जनि धनिक जङ्गम तदितर जन्तु जात दिव्य गति दान दर्शित नित्य निःसीम वैभव !

92 भव तपन तापित भक्तजन भद्राराम !

93 श्रीरामभद्र !

94 नमस्ते पुनस्ते नमः !



चतुर्मुखेश्वरमुखैः पुत्रपौत्रादिशालिने ।
नमः सीतासमेताय रामाय गृहमेधिने ॥

कविकथकसिंहकथितं कठोरसुकुमारगुम्भगम्भीरम् ।
भवभयभेषजमेतत् पठत महावीरवैभवं सुधियः ॥

श्री महावीरवैभवं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकायनमः

---

श्रीः

## श्री-गोपालविंशतिः - 16

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

505 वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् ।
जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ 1

506 वाचं निजाङ्करसिकां प्रसमीक्षमाणः
वक्त्रारविन्दविनिवेशितपाञ्चजन्यः ।
वर्णत्रिकोणरुचिरे वरपुण्डरीके
बद्धासनो जयति वल्लवचक्रवर्ती ॥ 2

507 आम्नायगन्धिरुदितस्फुरिताधरोष्ठम्
आस्राविलेक्षणमनुक्षणमन्दहासम् ।
गोपालडिम्भवपुषं कुहनाजनन्याः
प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ 3

508 आविर्भवत्वनिभृताभरणं पुरस्तात्
आकुञ्चितैकचरणं निभृतान्यपादम ।
दध्ना निमन्थमुखरेण निबद्धताळं
नाथस्य नन्दभवने नवनीतनाट्यम् ॥ 4

509 हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत् प्रचलितपदो नापगच्छन् न तिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥ 5

510 व्रजयोषिदपाङ्गवेधनीयं मधुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधूस्तनन्धयं तत् किमपि ब्रह्म किशोरभावदृश्यम् ॥ 6

511 परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चित् विपुलोलूखलकर्षकं कुमारम् ॥ 7

512 निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमळार्जुनदृष्टबालकेळिं यमुनासाक्षिकयौवनं युवानम् ॥ 8

513 पदवीमदवीयसीं विमुक्तेः अटवीसंपदमम्बुवाहयन्तीम् ।
अरुणाधरसाभिलाषवंशां करुणां कारणमानुषीं भजामि ॥ 9

514 अनिमेषनिषेवणीयमक्ष्णोः अजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तळं कलापैः करणोन्मादकविभ्रमं महो मे ॥ 10



515 अनुयायिमनोज्ञवंशनाळैः अवतु स्पर्शितवल्लवीविमोहैः ।
अनघस्मितशीतळैरसौ माम् अनुकम्पासरिदम्बुजैरपाङ्गैः ॥ 11

516 अधराहितचारुवंशनाळाः मकुटालम्बिमयूरपिञ्छमालाः ।
हरिनीलशिलाविभङ्गनीलाः प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥ 12

517 अखिलानवलोकयामि कालान् महिळाधीनभुजान्तरस्य यूनः ।
अभिलाषपदं व्रजाङ्गनानाम् अभिलापक्रमदूरमाभिरूप्यम् ॥ 13

518 हृदि मुग्धशिखण्डमण्डनो लिखितः केन ममैष शिल्पिना ।
मदनातुरवल्लवाङ्गनावदनाम्भोजदिवाकरो युवा ॥ 14

519 महसे महिताय मौळिना विनतेनाञ्जलिमञ्जनत्विषे ।
कलयामि विमुग्धवल्लवीवलयाभाषितमञ्जुवेणवे ॥ 15

520 जयति ललितवृत्तिं शिक्षितो वल्लवीनां
शिथिलवलयशिञ्जाशीतळैर्हस्तताळैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णोः
अधरमणिसुधायामंशवान् वंशनाळः ॥ 16

521 चित्राकल्पः श्रवसि कलयन् लाङ्गलीकर्णपूरं
बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं
गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ 17

522 लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्याम्
अंसे देव्याः पुळकरुचिरे संनिविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणुः
गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ 18

523 प्रत्यालीढस्थितिमधिगतां प्राप्तगाढाङ्कपालिं
पश्चादीषन्मिळितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्यात्
वारिक्रीडानिबिडवसनो वल्लवीवल्लभो नः ॥ 19

524 वासो हृत्वा दिनकरसुतासंनिधौ वल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।
सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने
कामी कश्चित् करकमलयोरञ्जलिं याचमानः ॥ 20

525 इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् ।
दिव्यवेणुरसिकं समीक्षते दैवतं किमपि यौवतप्रियम् ॥ 21

श्री गोपालविंशतिः समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्री-देहळीशस्तुतिः - 17

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

526 विक्रम्य येन विजितानि जगन्ति भूम्ना
विश्वस्य यं परमकारणमामनन्ति ।
विश्राणयन् प्रणयिनां विविधान् पुमर्थान्
गोप्ता स मे भवतु गोपपुराधिराजः ॥ 1



527 देहळ्यधीश्वर तवेदशमीश्वरत्वं
तुष्टूषतां दिशति गद्गदिकानुबन्धम् ।
वाचालयत्यथ च मां क्वचन क्षपायां
क्षान्तेन दान्तकविमुख्यविमर्दनेन ॥ 2

528 त्वच्चक्रवद्द्रुतमनेहसि घूर्णमाने
निम्नोन्नतक्रमनिदर्शितनेमिवृत्ताः ।
आराध्य गोपनगरे कृपयोदितं त्वां
स्वाराज्यमग्र्यमलभन्त सुरासुरेन्द्राः ॥ 3

529 आकल्पपुष्पसुभगोन्नतबाहुशाखः
पादे सदा परिपचेळिमसत्फलस्त्वम् ।
पण्णातटस्पृशि मृकण्डुतपोवनेऽस्मिन्
छायानिलीनभुवनोऽसि तमालशाखी ॥ 4

530 चक्रस्य दैत्यदनुजादिषु वामभावं
शङ्खस्य चाश्रितजनेष्वपि दक्षिणत्वम् ।
व्यक्तं प्रदर्शयसि गोपपुराधिराज
व्यत्यस्य नूनमनयोः करसंप्रयोगम् ॥ 5

531 दीपेन केनचिदशीतरुचा निशीथे
स्नेहोपपन्नपरिशुद्धगुणार्पितेन ।
दृष्टावकाशनिबिडं ददृशुर्भवन्तं
स्वाध्याययोगनयनाः शुचयः कवीन्द्राः ॥ 6

532 कासारपूर्वकविमुख्यविमर्दजन्मा
पण्णातटेक्षुसुभगस्य रसो बहुस्ते ।
त्वत्पादपद्ममधुनि त्वदनन्यभोग्ये
नूनं समाश्रयति नूतनशर्करात्वम् ॥ 7

533 वैरोचनेः सदसि वामनभूमिकावान्
विक्रान्तिताण्डवरसेन विजृम्भमाणः ।
चक्रे भवान् मकरकुण्डलकर्णपाशः
श्यामैकमेघभरितामिव सप्तलोकीम् ॥ 8

534 चित्रं न तत् त्रिषु मितानि पदेषु यत् ते
विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैः समं क्वचिदसौ भवनैकदेशे
माति स्म मूर्तिरमिता तदिहाद्भुतं नः ॥ 9

535 भक्तप्रिय त्वयि तथा परिवर्धमाने
मुक्तावितानविततिस्तव पूर्वमासीत् ।
हारावलिः परमथो रशनाकलापः
तारागणस्तदनु मौक्तिकनूपुरश्रीः ॥ 10

536 भिक्षोचितं प्रकटयन् प्रथमाश्रमं त्वं
कृष्णाजिनं यवनिकां कृतवान् प्रियायाः ।
व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे तां
त्वामेव गोपनगरीश जना विदुस्त्वाम् ॥ 11

537 सत्कुर्वतां तव पदं चतुराननत्वं
पादोदकं च शिरसा वहतां शिवत्वम् ।
एकत्र विक्रमणकर्मणि तत् द्वयं ते
देहल्यधीश युगपत् प्रथितं पृथिव्याम् ॥ 12

538 भक्तोपरोधसह पादसरोजतस्ते
मन्दाकिनी विगळिता मकरन्दधारा ।
सद्यस्त्रिवर्गमपवर्गमपि क्षरन्ती
पुण्या बभूव पुरशासनमौळिमाला ॥ 13



539 विक्रान्तिकेतुपटिका पदवाहिनी ते
न्यञ्चन्त्युपैति नतजीवित शिंशुमारम् ।
औत्तानपादिममृतांशुमशीतभानुं
हेमाचलं पशुपतिं हिमवन्तमुर्वीम् ॥ 14

540 वेधःकमण्डलुजलैर्विहितार्चनं ते
पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना ।
स्तोत्रप्रिय त्रिपथगादिसरिद्वराणां
पण्णा बभूव भुवने बहुमानपात्रम् ॥ 15

541 स्वच्छन्दविक्रमसमुन्नमितादमुष्मात्
स्रोतस्त्रयं यदभवत् तव पादपद्मात् ।
वेताळभूतसरसामपदिश्य वाचं
प्रायेण तत् प्रसवभूमिमवाप भूयः ॥ 16

542 क्रीडापरेण भवता विहितोपरोधान्
आराधकाननुपरोधमुदञ्चयिष्यन् ।
ताम्रेण पादनखरेण तदाऽण्डमध्ये
घण्टापथं कमपि नूनमवर्तयस्त्वम् ॥ 17

543 कामाविलेऽपि करुणार्णवबिन्दुरेकः
क्षिप्तः स्वकेळितरसा तव देहळीश ।
तत्संततेरुभयथा विततिं भजन्त्याः
संसारदावदहनं शमयत्यशेषम् ॥ 18

544 नीडोदरान्निपतितस्य शुकार्भकस्य
त्राणेन नाथ विहरन्निव सार्वभौमः ।
आदाय गोपनगराधिपते स्वयं मां
क्रीडादयाव्यतिकरेण कृतार्थय त्वम् ॥ 19

545 लीलाशकुन्तमिव मां स्वपदोपलब्ध्यै
स्वैरं क्षिपन् दुरितपञ्जरतो गुणस्थम् ।
तत्तादृशं कमपि गोपपुरीविहारिन्
संतोषमुल्लळय सागरसंभवायाः ॥ 20

546 वातूलकल्पवृजिनप्रभवैर्मदीयां
वैयाकुलीं विषयसिन्धुतरङ्गभङ्गैः ।
दासोपमर्दसह दुर्निरसां त्वदन्यैः
अन्वीक्ष्य गाढमनुकम्पितुमर्हसि त्वम् ॥ 21

547 एनस्विनीमिति सदा मयि जायमानां
देहळ्यधीश दृषदोऽपि विलापयन्तीम् ।
नाथे समग्रशकने त्वयि जागरूके
किं ते सहेत करुणा करुणामवस्थाम् ॥ 22

548 आत्मोन्नतिं परनिकर्षमपीह वाञ्छन्
निम्ने विमोहजलधौ निपतामि भूयः ।
तन्मामुदञ्चय तवोन्नतपाददघ्नं
देहळ्यधीश गुणितेन दयागुणेन ॥ 23

549 अक्षीणकल्मषरसोऽपि तवानृशंस्यात्
लक्ष्मीसमक्षमपि विज्ञपयाम्यभीतः ।
भक्तोपमर्दरसिक स्वयमल्पबुद्धेः
यन्मन्यसे मम हितं तदुपाददीथाः ॥ 24

550 मन्ये दयार्द्रहृदयेन महाधनं मे
दत्तं त्वयेदमनपायमकिञ्चनत्वम् ।
येन स्तनंधयमिव स्वहितानभिज्ञं
न्यासीकरोषि निजपादसरोरुहे माम् ॥ 25



551 दुर्वारतीव्रदुरितप्रतिवावदूकैः
औदार्यवद्भिरनघस्मितदर्शनीयैः ।
देहळ्यधीश्वर दयाभरितैरपाङ्गैः
वाचं विनाऽपि वदसीव मयि प्रसादम् ॥ 26

552 अयमनवमसूक्तैरादिभक्तैर्यथावत्
विशदितनिजतत्त्वो विश्वमव्याद्भव्यात् ।
रथचरणनिरूढव्यञ्जनानां जनानां
दुरितमथनलीलादोहळी देहळीशः ॥ 27

553 इयमवितथवर्णा वर्णनीयस्वभावात्
विदितनिगमसीम्ना वेङ्कटेशेन गीता ।
भवमरुभुवि तृष्णालोभपर्याकुलानां
दिशतु फलमभीष्टं देहळीशस्तुतिर्नः ॥ 28

श्री-देहळीशस्तुतिः समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्रीस्तुतिः - 18

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

554 मानातीतप्रथितविभवां मङ्गळं मङ्गळानां
वक्षःपीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां
श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ 1

555 आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः
स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा ।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ 2

556 स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितरगतिः स्तोतुमाशंसमानः ।
सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ 3

557 यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां
जन्मस्थेमप्रळयरचना जङ्गमाजङ्गमानाम् ।
तत् कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ 4



558 निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं
विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्यलक्ष्यम् ।
शेषश्चित्तं विमलमनसां मौळयश्च श्रुतीनां
संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ 5

559 उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं
प्रत्युग्रूपे हविषि युवयोरेकशेषित्वयोगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन् मानसं नः ॥ 6

560 पश्यन्तीषु श्रुतिषु परितः सूरिबृन्देन सार्धं
मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम् ।
विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौ
ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम् ॥ 7

561 अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति ।
यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ 8

562 त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तःकलहमलिनैः किंचिदुत्तीर्य मग्नैः ।
त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां
भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ 9

563 आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोः
आचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम् ।
प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ 10

564 धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या
तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।
यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धौ
इच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते ॥ 11

565 आसंसारं विततमखिलं वाङ्मयं यद्विभूतिः
यद्भ्रूभङ्गात् कुसुमधनुषः किंकरो मेरुधन्वा ।
यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः
पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥ 12

566 अग्रे भर्तुः सरसिजमये भद्रपीठे निषण्णाम्
अम्भोराशेरधिगतसुधासंप्लवादुत्थितां त्वाम् ।
पुष्पासारस्थगितभुवनैः पुष्कलावर्तकाद्यैः
क्लृप्तारम्भाः कनककलशैरभ्यषिञ्चन् गजेन्द्राः ॥ 13

567 आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां
शापाक्रान्ताः शरणमगमन् सावरोधाः सुरेन्द्राः ।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः
सर्वाकारस्थिरसमुदयां संपदं निर्विशन्ति ॥ 14

568 आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहैः
अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ।
यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते संपदोघाः ॥ 15

569 योगारम्भत्वरितमनसो युष्मदैकान्त्ययुक्तं
धर्मं प्राप्तुं प्रथममिह ये धारयन्ते धनायाम् ।
तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा
धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ 16



570 श्रेयस्कामाः कमलनिलये चित्रमाम्नायवाचां
चूडापीडं तव पदयुगं चेतसा धारयन्तः ।
छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः
श्लाघाशब्दश्रवणमुदिताः स्रग्विणः संचरन्ति ॥ 17

571 ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन्
दूरीकर्तुं दुरितनिवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिकजननग्रामसीमान्तरेखाम्
आलम्बन्ते विमलमनसो विष्णुकान्ते दयां ते ॥ 18

572 जाताकाङ्क्षा जननि युवयोरेकसेवाधिकारे
मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते
वेलाभङ्गप्रशमनफलं वैदिकं धर्मसेतुम् ॥ 19

573 सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते
सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् ।
यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ 20

574 सानुप्रासप्रकटितदयैः सान्द्रवात्सल्यदिग्धैः
अम्ब स्निग्धैरमृतलहरीलब्धसब्रह्मचर्यैः ।
घर्मे तापत्रयविरचिते गाढतप्तं क्षणं माम्
आकिञ्चन्यग्लपितमनघैरार्द्रयेथाः कटाक्षैः ॥ 21

575 संपद्यन्ते भवभयतमीभानवस्त्वत्प्रसादात्
भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं त्वामहमिह यतः शीतळोदारशीला
भूयो भूयो दिशसि महतां मङ्गळानां प्रबन्धान् ॥ 22

576 माता देवि त्वमसि भगवान् वासुदेवः पिता मे
जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः ।
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं
किं ते भूयः प्रियमिति किल स्मेरवक्त्रा विभासि ॥ 23

577 कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा
नित्यामोदा निगमवचसां मौळिमन्दारमाला ।
संपद्दिव्या मधुविजयिनः संनिधत्तां सदा मे
सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ 24

578 उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात्
कलिकलुषनिवृत्त्यै कल्पमानं प्रजानाम् ।
सरसिजनिलयायाः स्तोत्रमेतत् पठन्तः
सकलकुशलसीमाः सार्वभौमा भवन्ति ॥ 25

श्रीस्तुतिः समाप्ता

---

**कवितार्किकसिंहाय कल्याणगुणशालिने ।**
**श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥**
**श्रीमते निगमान्तमहादेशिकाय नमः**

---



**श्रीः**

# श्री-भूस्तुतिः - 19

**श्रीमते निगमान्तमहादेशिकाय नमः**
**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।**
**वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥**

---

579 संकल्पकल्पलतिकामवधिं क्षमायाः
स्वेच्छावराहमहिषीं सुलभानुकम्पाम् ।
विश्वस्य मातरमकिञ्चनकामधेनुं
विश्वंभरामशरणः शरणं प्रपद्ये ॥ 1

580 त्वां व्याहृतिः प्रथमतः प्रणवः प्रियं ते
संवेदयत्यखिलमन्त्रगणस्तमेव ।
इत्थं प्रतीतविभवामितरेष्विदानीं
स्तोतुं यथावदवने क इवार्हति त्वाम् ॥ 2

581 नित्यं हिताहितविपर्ययबद्धभावे
त्वद्वीक्षणैकविनिवर्त्यबहुव्यपाये ।
मुग्धाक्षरैरखिलधारिणि मोदमाना
मातः स्तनंधयधियं मयि वर्तयेथाः ॥ 3

582 संकल्पकिङ्करचराचरचक्रवाळं
सर्वातिशायिनमनन्तशयस्य पुंसः ।
भूमानमात्मविभवैः पुनरुक्तयन्ती
वाचामभूमिरपि भूमिरसि त्वमेका ॥ 4

583 वेधस्तृणावधि विहारपरिच्छदं ते
विश्वं चराचरतया व्यतिभिद्यमानम् ।
अम्ब त्वदाश्रिततया परिपोषयन्ती
विश्वंभरस्य दयिताऽसि तदेकनामा ॥ 5

584 सर्वंसहेत्यवनिरित्यचलेति मातः
विश्वंभरेति विपुलेति वसुंधरेति ।
अन्यानि चान्यविमुखान्यभिधानवृत्त्या
नामान्यमूनि कथयन्ति तवानुभावम् ॥ 6

585 तापान् क्षिपन् प्रसविता सुमनोगणानां
प्रच्छायशीतळतलः प्रदिशन् फलानि ।
त्वत्संगमाद्भवति माधवि लब्धपोषः
शाखाशतैरधिगतो हरिचन्दनोऽसौ ॥ 7

586 स्मेरेण वर्धितरसस्य मुखेन्दुना ते
निस्पन्दतां विजहतो निजया प्रकृत्या ।
विश्रान्तिभूमिरसि तत्त्वतरङ्गपङ्क्तेः
वेलेव विष्णुजलधेरपृथग्भवन्ती ॥ 8

587 स्वाभाविके वसुमति श्रुतिभिर्विभाव्ये
पत्युर्महिम्नि भवतीं प्रतिपन्नवासाम् ।
शङ्के विमानवहनप्रतिमासमानाः
स्तम्बेरमप्रभृतयोऽपि वहन्ति सत्त्वाः ॥ 9

588 संभावयन् मधुरिपुः प्रणयानुरोधात्
वक्षःस्थलेन वरुणालयराजकन्याम् ।
विश्वंभरे बहुमुखप्रतिपन्नभोगः
शेषात्मना तु भवतीं शिरसा दधाति ॥ 10



589 क्रीडावराहदयिते कृतिनः क्षितीन्द्राः
संक्रन्दनस्तदितरेऽपि दिशामधीशाः ।
आमोदयन्ति भुवनान्यळिकाश्रितानाम्
अम्ब त्वदङ्घ्रिरजसां परिणामभेदैः ॥ 11

590 भूतेषु यत् त्वदभिमानविशेषपात्रं
पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूतगुणपञ्चकमाद्यमेतत्
प्रायो निदर्शनतया प्रतिपादयन्ति ॥ 12

591 कान्तस्तवैष करुणाजलधिः प्रजानाम्
आज्ञातिलङ्घनवशादुपजातरोषः ।
अह्नाय विश्वजननि क्षमया भवत्या
सर्वावगाहनसहामुपयात्यवस्थाम् ॥ 13

592 आश्वासनाय जगतां पुरुषे परस्मिन्
आपन्नरक्षणदशामभिनेतुकामे ।
अन्तर्हितेतरगुणादबलास्वभावात्
औदन्वते पयसि मज्जनमभ्यनैषीः ॥ 14

593 पूर्वं वराहवपुषा पुरुषोत्तमेन
प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रळयवारिधयस्तवासन्
उद्वाहमङ्गळविधेरुचिता मृदङ्गाः ॥ 15

594 व्योमातिलङ्घिनि विभोः प्रळयाम्बुराशौ
वेशान्तलेश इव मातुमशक्यमूर्तेः ।
सद्यः समुद्रवसने सरसैरकार्षीः
आनन्दसागरमपारमपाङ्गपातैः ॥ 16

595 दंष्ट्राविदारितमहासुरशोणिताङ्कैः
अङ्गैः प्रियस्तव दधे परिरम्भलीलाम् ।
सा ते पयोधिजलकेलिसमुत्थितायाः
सैरन्ध्रिकेव विदधे नवमङ्गरागम् ॥ 17

596 अन्योन्यसंवलनजृम्भिततूर्यघोषैः
संवर्तसिन्धुसलिलैर्विहिताभिषेका ।
एकातपत्रयसि विश्वमिदं गुणैः स्वैः
अध्यास्य भर्तुरधिकोन्नतमंसपीठम् ॥ 18

597 भर्तुस्तमालरुचिरे भुजमध्यभागे
पर्यायमौक्तिकवती पृषतैः पयोधेः ।
तापानुबन्धशमनी जगतां त्रयाणां
तारापथे स्फुरसि तारकिता निशेव ॥ 19

598 आसक्तवासवशरासनपल्लवैस्त्वां
संवृद्धये शुभतटिद्गुणजालरम्यैः ।
देवेशदिव्यमहिषीं धृतसिन्धुतोयैः
जीमूतरत्नकलशैरभिषिञ्चति द्यौः ॥ 20

599 आविर्मदैरमरदन्तिभिरुह्यमानां
रत्नाकरेण रुचिरां रशनागुणेन ।
मातस्त्रिलोकजननीं वनमालिनीं त्वां
मायावराहमहिषीमवयन्ति सन्तः ॥ 21

600 निष्कण्टकप्रशमयोगनिषेवणीयां
छायाविशेषपरिभूतसमस्ततापाम् ।
स्वर्गापवर्गसरणिं भवतीमुशन्ति
स्वच्छन्दसूकरवधूमवधूतपङ्काम् ॥ 22



601 गण्डोज्ज्वलां गहनकुन्तलदर्शनीयां
शैलस्तनीं तरलनिर्झरलम्बहाराम् ।
श्यामां स्वतस्त्रियुगसूकरगेहिनि त्वं
व्यक्तिं समुद्रवसनामुभयीं बिभर्षि ॥ 23

602 निःसंशयैर्निगमसीमनि विष्णुपत्नि
प्रख्यापितं भृगुमुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्यपरधीरससंस्कृतेन
सन्तः समाधिनयनेन तवानुभावम् ॥ 24

603 संचोदिता करुणया चतुरः पुमर्थान्
व्यातन्वती विविधमन्त्रगणोपगीता ।
संचिन्त्यसे वसुमति स्थिरभक्तिबन्धैः
अन्तर्बहिश्च बहुधा प्रणिधानदक्षैः ॥ 25

604 क्रीडागृहीतकमलादिविशेषचिह्नां
विश्राणिताभयकरां वसुधे सभूतिम् ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां
संचिन्तयन् हि लभते धनदाधिकारम् ॥ 26

605 उद्वेलकल्मषपरंपरितादमर्षात्
उत्तंसितेन हरिमञ्जलिनाऽप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्ययति प्रजानाम्
अम्ब त्वदीयकरुणापरिणाम एव ॥ 27

606 प्रत्येकमब्दनियुतैरपि दुर्व्यपोहात्
प्राप्ते विपाकसमये जनितानुतापात् ।
नित्यापराधनिवहाच्चकितस्य जन्तोः
गन्तुं मुकुन्दचरणौ शरणं क्षमे त्वम् ॥ 28

607 त्राणाभिसंधिसुभगेऽपि सदा मुकुन्दे
संसारतन्त्रवहनेन विळम्बमाने ।
रक्षाविधौ तनुभृतामनघानुकम्पा
मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ 29

608 धर्मद्रुहं सकलदुष्कृतिसार्वभौमम्
आत्मानभिज्ञमनुतापलवोज्झितं माम् ।
वैतानसूकरपतेश्चरणारविन्दे
सर्वंसहे ननु समर्पयितुं क्षमा त्वम् ॥ 30

609 तापत्रयीं निरवधिं भवतीदयार्द्राः
संसारघर्मजनितां सपदि क्षिपन्तः ।
मातर्भजन्तु मधुरामृतवर्षमैत्रीं
मायावराहदयिते मयि ते कटाक्षाः ॥ 31

610 पत्युर्दक्षिणपाणिपङ्कजपुटे विन्यस्तपादाम्बुजा
वामं पन्नगसार्वभौमसदृशं पर्यङ्कयन्ती भुजम् ।
पोत्रस्पर्शलसत्कपोलफलका फुल्लारविन्देक्षणा
सा मे पुष्यतु मङ्गळान्यनुदिनं सर्वाणि सर्वंसहा ॥ 32

611 अस्येशाना जगत इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धाभक्तिप्रचयगुरुणा चेतसा संस्तुवानः
यद्यत् काम्यं सपदि लभते तत्र तत्र प्रतिष्ठाम् ॥ 33

श्री-भूस्तुतिः समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---



श्रीः

# श्री-गोदास्तुतिः - 20

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

612 श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं
श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात् क्षमां करुणया कमलामिवान्यां
गोदामनन्यशरणः शरणं प्रपद्ये ॥ 1

613 वैदेशिकः श्रुतिगिरामपि भूयसीनां
वर्णेषु माति महिमा न हि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे
मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ 2

614 त्वत्प्रेयसः श्रवणयोरमृतायमानां
तुल्यां त्वदीयमणिनूपुरशिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभिष्टवार्हां
वाचं प्रसन्नमधुरां मम संविधेहि ॥ 3

615 कृष्णान्वयेन दधतीं यमुनानुभावं
तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वरधियां भवतीकटाक्षात्
वाचः स्फुरन्ति मकरन्दमुचः कवीनाम् ॥ 4

616 अस्मादृशामपकृतौ चिरदीक्षितानाम्
अह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौळिदाम्ना
तन्त्रीनिनादमधुरैश्च गिरां निगुम्भैः ॥ 5

617 शोणाऽधरेऽपि कुचयोरपि तुङ्गभद्रा
वाचां प्रवाहनिवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजा स्वभावात्
गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि ॥ 6

618 वल्मीकतः श्रवणतो वसुधात्मनस्ते
जातो बभूव स मुनिः कविसार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते
वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥ 7

619 भोक्तुं तव प्रियतमं भवतीव गोदे
भक्तिं निजां प्रणयभावनया गृणन्तः ।
उच्चावचैर्विरहसंगमजैरुदन्तैः
शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ 8

620 मातः समुत्थितवतीमधिविष्णुचित्तं
विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिमरुचेरिव मूर्तिमन्यां
सन्तः पयोधिदुहितुः सहजां विदुस्त्वाम् ॥ 9

621 तातस्तु ते मधुमिदः स्तुतिलेशवश्यात्
कर्णामृतैः स्तुतिशतैरनवाप्तपूर्वम् ।
त्वन्मौळिगन्धसुभगामुपहृत्य मालां
लेभे महत्तरपदानुगुणं प्रसादम् ॥ 10



622 दिक् दक्षिणाऽपि परिपक्त्रिमपुण्यलभ्यात्
सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमानपूर्वं
निद्रालुनाऽपि नियतं निहिताः कटाक्षाः ॥ 11

623 प्रायेण देवि भवतीव्यपदेशयोगात्
गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात्
भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः ॥ 12

624 नागेशयः सुतनु पक्षिरथः कथं ते
जातः स्वयंवरपतिः पुरुषः पुराणः ।
एवंविधाः समुचितं प्रणयं भवत्याः
संदर्शयन्ति परिहासगिरः सखीनाम् ॥ 13

625 त्वद्भुक्तमाल्यसुरभीकृतचारुमौळेः
हित्वा भुजान्तरगतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथः प्रतिघातलोलाः
बर्हातपत्ररुचिमारचयन्ति भृङ्गाः ॥ 14

626 आमोदवत्यपि सदा हृदयंगमाऽपि
रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि ।
मौळिस्रजा तव मुकुन्दकिरीटभाजा
गोदे भवत्यधरिता खलु वैजयन्ती ॥ 15

627 त्वन्मौळिदामनि विभोः शिरसा गृहीते
स्वच्छन्दकल्पितसपीतिरसप्रमोदाः ।
मञ्जुस्वना मधुलिहो विदधुः स्वयं ते
स्वायंवरं कमपि मङ्गळतूर्यघोषम् ॥ 16

628 विश्वायमानरजसा कमलेन नाभौ
वक्षःस्थले च कमलास्तनचन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे
धत्ते नतेन शिरसा तव मौळिमालाम् ॥ 17

629 चूडापदेन परिगृह्य तवोत्तरीयं
मालामपि त्वदळकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे
सौभाग्यसंपदभिषेकमहाधिकारम् ॥ 18

630 तुङ्गैरकृत्रिमगिरः स्वयमुत्तमाङ्गैः
यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः
सोऽपि त्वदीयकुटिलाळकवासिताभिः ॥ 19

631 धन्ये समस्तजगतां पितुरुत्तमाङ्गे
त्वन्मौळिमाल्यभरसंभरणेन भूयः ।
इन्दीवरस्रजमिवादधति त्वदीयानि
आकेकराणि बहुमानविलोकितानि ॥ 20

632 रङ्गेश्वरस्य तव च प्रणयानुबन्धात्
अन्योन्यमाल्यपरिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं
न्यूनाधिकत्वसमताविषयैर्विवादैः ॥ 21

633 दूर्वादळप्रतिमया तव देहकान्त्या
गोरोचनारुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झितशिखावळकण्ठशोभं
माङ्गल्यदं प्रणमतां मधुवैरिगात्रम् ॥ 22



634 अर्च्यं समर्च्य नियमैर्निगमप्रसूनैः
नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन् निजमाधिराज्यं
मान्या मनुप्रभृतयोऽपि महीक्षितस्ते ॥ 23

635 आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं
रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र नासीत्
प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ 24

636 गोदे गुणैरपनयन् प्रणतापराधान्
भ्रूक्षेप एव तव भोगरसानुकूलः ।
कर्मानुबन्धिफलदानरतस्य भर्तुः
स्वातन्त्र्यदुर्व्यसनमर्मभिदानिदानम् ॥ 25

637 रङ्गे तटिद्गुणवतो रमयैव गोदे
कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां
सन्तः प्रपद्य शमयन्त्यचिरेण तापान् ॥ 26

638 जातापराधमपि मामनुकम्प्य गोदे
गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्यनिर्भरतया जननी कुमारं
स्तन्येन वर्धयति दष्टपयोधराऽपि ॥ 27

639 शतमखमणिनीला चारुकल्हारहस्ता
स्तनभरनमिताङ्गी सान्द्रवात्सल्यसिन्धुः ।
अळकविनिहिताभिः स्रग्भिराकृष्टनाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ 28

640 इति विकसितभक्तेरुत्थितां वेङ्कटेशात्
बहुगुणरमणीयां वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमतो रङ्गभर्तुः
चरणकमलसेवां शाश्वतीमभ्युपैष्यन् ॥ 29

श्री-गोदास्तुतिः समाप्ता

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीः

## श्री-न्यासदशकम्-21

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

641 अहं मद्रक्षणभरो मद्रक्षणफलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेत् बुधः ॥ 1

642 न्यस्याम्यकिंचनः श्रीमन् अनुकूलोऽन्यवर्जितः ।
विश्वासप्रार्थनापूर्वम् आत्मरक्षाभरं त्वयि ॥ 2

643 स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन् न्यस्यति मां स्वयम् ॥ 3

644 श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ 4



645 त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्येकप्रयोजनम् ।
निषिद्धकाम्यरहितं कुरु मां नित्यकिङ्करम् ॥ 5

646 देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥ 6

647 मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैङ्कर्योपकरणं वरद स्वीकुरु स्वयम् ॥ 7

648 त्वदेकरक्ष्यस्य मम त्वमेव करुणाकर ।
न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ 8

649 अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ 9

650 श्रीमान् नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् ।
अचीकरत् स्वयं स्वस्मिन् अतोऽहमिह निर्भरः ॥ 10

श्री-न्यासदशकं समाप्तम्

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

श्रीः

# श्री - न्यासविंशतिः - 22

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

651 सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं
सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् ।
डम्भासूयादिमुक्तं जितविषयिगणं दीर्घबन्धुं दयालुं
स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ 1

652 अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वात्
जन्मप्रध्वंसिजन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् ।
निष्प्रत्यूहानृशंस्यात् नियतरसतया नित्यशेषित्वयोगात्
आचार्यः सद्भिरप्रत्युपकरणधिया देववत् स्यादुपास्यः ॥ 2

653 सद्बुद्धिः साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी
शुश्रूषुस्त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीक्षः ।
शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली
शिष्यः प्राप्तः परीक्षां कृतविदभिमतं तत्त्वतः शिक्षणीयः ॥ 3

654 स्वाधीनाशेषसत्तास्थितियतनफलं विद्धि लक्ष्मीशमेकं
प्राप्यं नान्यं प्रतीया न च शरणतया कंचिदन्यं वृणीयाः ।
एतस्मादेव पुंसां भयमितरदपि प्रेक्ष्य मोज्झीस्तदाज्ञाम्
इत्येकान्तोपदेशः प्रथममिह गुरोरेकचित्तेन धार्यः ॥ 4



655 मोक्षोपायार्हतैवं भवति भवभृतां कस्यचित् क्वापि काले
तद्वद्भक्तिप्रपत्त्योरधिकृतिनियमस्तादृशा स्यान्नियत्या ।
शक्ताशक्तादितत्तत्पुरुषविषयतः स्थाप्यते तद्व्यवस्था
यच्चाहुस्तद्विकल्पः सम इति कतिचित् तत्फलस्याविशेषात् ॥ 5

656 सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्टसिद्ध्यै
लोकेऽप्येतत् प्रसिद्धं न च विमतिरिह प्रेक्ष्यते क्वापि तन्त्रे ।
तस्मात् कैमुत्यसिद्धं भगवति तु भरन्यासविद्यानुभावं
धर्मस्थेयाश्च पूर्वे स्वकृतिषु बहुधा स्थापयांचक्रुरेवम् ॥ 6

657 शास्त्रप्रामाण्यवेदी ननु विधिविषये निर्विशङ्कोऽधिकारी
विश्वासस्याङ्गभावे पुनरिह विदुषा किं महत्त्वं प्रसाध्यम् ।
मैवं घोरापराधैः सपदि गुरुफले न्यासमात्रेण लभ्ये
शङ्का पार्ष्णिग्रहार्हा शमयितुमुचिता हेतुभिस्तत्तदर्हैः ॥ 7

658 नेहाभिक्रान्तिनाशो न च विहतिरिह प्रत्यवायो भवेदिति
उक्तं कैमुत्यनीत्या प्रपदनविषये योजितं शास्त्रविद्भिः ।
तस्मात् क्षेत्रे तदर्हे सुविदितसमयैर्देशिकैः सम्यगुप्तं
मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय ॥ 8

659 न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितः स्वध्वरश्चास्य कर्ता
अहिर्बुध्न्योऽप्यन्ववादीदगणि दिविषदामुत्तमं गुह्यमेतत् ।
साक्षान्मोक्षाय चासौ श्रुत इह तु मुधा बाधशङ्का गुणाढ्ये
तन्निष्ठो ह्यन्यनिष्ठान् प्रभुरतिशयितुं कोटिकोट्यंशतोऽपि ॥ 9

660 नाना शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यक्
न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् ।
आख्यारूपादिभेदः श्रुत इतरसमः किं च भिन्नोऽधिकारः
शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ॥

661 यत् किंचिद्रक्षणीयं तदवननिपुणे न्यस्यतोऽकिंचनस्य
प्रस्पष्टं लोकदृष्ट्याऽप्यवगमित इह प्रार्थनाद्यङ्गयोगः ।
तस्मात् कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाववादः
साङ्गे त्वष्टाङ्गयोगव्यवहृतिनयतः षड्विधत्वोपचारः ॥ 11

662 पश्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभावभाञ्जि प्रपत्तेः
कैश्चित् संभावितत्वं यदिह निगदितं तत् प्रपत्त्युत्तरं स्यात् ।
अङ्गेष्वङ्गित्ववादः फलकथनमिह द्वित्रिमात्रोक्तयश्च
प्राशस्त्यं तत्र तत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम् ॥ 12

663 रक्षापेक्षा स्वसाद्यप्रणयवति भरन्यास आज्ञादिदक्षे
दृष्टा नात्र प्रपत्तिव्यवहृतिरिह तन्मेळने लक्षणं स्यात् ।
गेहागत्यादिमात्रे निपततु शरणागत्यभिख्योपचारात्
यद्वाऽनेकार्थभावाद्भवति हि विविधः पालनीयत्वहेतुः ॥ 13

664 आत्मात्मीयस्वरूपन्यसनमनुगतं यावदर्थं मुमुक्षोः
तत्त्वज्ञानात्मकं तत् प्रथममथ विधेः स्यादुपाये समेतम् ।
कैङ्कर्याख्ये पुमर्थेऽप्यनुषजति तदभ्यर्थनाहेतुभावात्
स्वाभीष्टानन्यसाध्यावधिरिह तु भरन्यासभागोऽङ्गिभूतः ॥ 14

665 न्यासादेशेषु धर्मत्यजनवचनतोऽकिंचनाधिक्रियोक्ता
कार्पण्यं वाऽङ्गमुक्तं भजनवदितरापेक्षणं वाऽप्यपोढम् ।
दुःसाधेच्छोद्यमौ वा क्वचिदुपशमितावन्यसंमेळने वा
ब्रह्मास्त्रन्याय उक्तस्तदिह न विहतो धर्म आज्ञादिसिद्धः ॥ 15

666 आदेष्टुं स्वप्रपत्तिं तदनुगुणगुणाद्यन्वितं स्वं मुकुन्दो
मामित्युक्त्वैकशब्दं वदति तदुचितं तत्र तात्पर्यमूह्यम् ।
तत् प्राप्यप्रापकैक्यं सकलफलदतां न्यासतोऽन्यानपेक्षां
प्राधान्याद्यं च किंचित् प्रथयति स परं श्रीसखे मुक्त्युपाये ॥



667 स्वाभीष्टप्राप्तिहेतुः स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः
शास्त्रे लोके च सिद्धः स पुनरुभयथा सिद्धसाध्यप्रभेदात् ।
सिद्धोपायस्तु मुक्तौ निरवधिकदयः श्रीसखः सर्वशक्तिः
साध्योपायस्तु भक्तिर्न्यसनमिति पृथक् तद्वशीकारसिद्ध्यै ॥ 17

668 अत्यन्ताकिंचनोऽहं त्वदपचरणतः संनिवृत्तोऽद्य नाथ
त्वत्सेवैकान्तधीः स्यां त्वमसि शरणमित्यध्यवस्यामि गाढम् ।
त्वं मे गोपायिता स्यास्त्वयि निहितभरोऽस्म्येवमित्यर्पितात्मा
यस्मै स न्यस्तभारः सकृदथ तु सदा न प्रयस्येत् तदर्थम् ॥

669 त्यक्त्वोपायानपायानपि परमजहन्मध्यमां स्वार्हवृत्तिं
प्रायश्चित्तं च योग्यं विगतऋणततिर्द्वन्द्वबात्यां तितिक्षुः ।
भक्तिज्ञानादिवृद्धिं परिचरणगुणान् सत्समृद्धिं च युक्तां
नित्यं याचेदनन्यस्तदपि भगवतस्तस्य यद्वाऽऽप्तवर्गात् ॥ 19

670 आज्ञाकैङ्कर्यवृत्तिष्वनघगुरुजनप्रक्रियानेमिवृत्तिः
स्वार्हानुज्ञातसेवाविधिषु च शकने यावदिष्टं प्रवृत्तः ।
कर्म प्रारब्धकार्यं प्रपदनमहिमध्वस्तशेषं द्विरूपं
भुक्त्वा स्वाभीष्टकाले विशति भगवतः पादमूलं प्रपन्नः ॥ 20

671 श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्यवर्गैश्च सिद्धां
स्वातन्त्र्ये पारतन्त्र्येऽप्यनितरगतिभिः सद्भिरास्थीयमानाम् ।
वेदान्ताचार्य इत्थं विविधगुरुजनग्रन्थसंवादवत्या
विंशत्या न्यासविद्यां व्यवृणुत सुधियां श्रेयसे वेङ्कटेशः ॥ 21

672 संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं
संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसंधिः ।
निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्रार्थ्य संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ 22

श्रीन्यासविंशतिः समाप्ता

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकायनमः

श्रीः

## श्री - न्यासतिलकम् - 23

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

673 गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥ 1

674 प्रायः प्रपदने पुसां पौनःपुन्यं निवारयन् ।
हस्तः श्रीरङ्गभर्तुर्माम् अव्यादभयमुद्रितः ॥ 2

675 अनादेर्निःसीम्नो दुरितजलधेर्यन्निरुपमं
विदुः प्रायश्चित्तं यदुरघुधुरीणाशयविदः ।
तदारम्भे तस्या गिरमवदधानेन मनसा
प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥ 3



676 महेन्द्राग्राविष्णुप्रभृतिषु महत्त्वप्रभृतिवत्
प्रपत्तव्ये तत्त्वे परिणमितवैशिष्ट्यविभवाम् ।
अधृष्यत्वं धूत्वा कमितुरभिगम्यत्वजननीं
श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ 4

677 स्वतःसिद्धः श्रीमानमितगुणभूमा करुणया
विधाय ब्रह्मादीन् वितरति निजादेशमपि यः ।
प्रपत्त्या साक्षाद्वा भजनशिरसा वाऽपि सुलभं
मुमुक्षुर्देवेशं तमहमधिगच्छामि शरणम् ॥ 5

678 बृन्दानि यः स्ववशयन् व्रजसुन्दरीणां
बृन्दावनान्तरभुवां सुलभो बभूव ।
श्रीमानशेषजनसंग्रहणाय शेते
रङ्गे भुजङ्गशयने स महाभुजङ्गः ॥ 6

679 रङ्गास्तीर्णभुजङ्गपुंगववपुःपर्यङ्कवर्यं गतौ
सर्गस्थित्यवसानकेळिरसिकौ तौ दम्पती नः पती ।
नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धस्मितौ
डिम्भस्याम्बुजसंभवस्य वचनैरोंतत्सदित्यादिभिः ॥ 7

680 घनकरुणारसौघभरितां परितापहरां
नयनमहश्छटां मयि तरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषी-
मलिनितविश्वसौधदुरपह्नववर्णसुधाम् ॥ 8

681 दुर्मोचोद्भटकर्मकोटिनिबिडोऽप्यादेशवश्यः कृतः
बाह्यैर्नैव विमोहितोऽस्मि कुदृशां पक्षैर्न विक्षोभितः ।
यो माहानसिको महान् यतिपतेर्नीतश्च तत्पौत्रजान्
आचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः ॥ 9

682 आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा
वह्न्यादेरनपेक्षणात् तनुभृतां सत्यादिवद्व्यापिनी ।
श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता
त्वय्येव त्वदुपायधीरपिहितस्वोपायभावाऽस्तु मे ॥ 10

683 त्वय्याचार्यैर्विनिहितभरास्तावका रङ्गनाथ
त्वत्कैङ्कर्यप्रवणमनसस्त्वद्गुणास्वादमत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत् साधनत्वं
त्वच्छेषत्वस्वरसरसिकाः सूरयो मे स्वदन्ताम् ॥ 11

684 कल्पस्तोमेऽप्यपास्तत्वदितरगतयोऽशक्तिधीभक्तिभूम्ना
रङ्गेश प्रातिकूल्यक्षरणपरिणमन्निर्विघातानुकूल्याः ।
त्रातारं त्वामभेद्याच्छरणवरणतो नाथ निर्विघ्नयन्तः
त्वन्निक्षिप्तात्मरक्षां प्रति रभसजुषः स्वप्रवृत्तिं त्यजन्ति ॥ 12

685 त्यक्तोपायव्यपायान् तदुभयकरणे सत्रपान् सानुतापान्
भूयोऽपि त्वत्प्रपत्त्या प्रशमितकलुषान् हन्त सर्वंसहस्त्वम् ।
रङ्गिन् न्यासान्तरङ्गाखिलजनहितता गोचरत्वन्निदेश-
प्रीतिप्रासस्ववर्णाश्रमशुभचरितान् पासि धन्याननन्यान् ॥ 13

686 शोकास्पदांशमथनः श्रयतां भवाब्धौ
रागास्पदांशसहजं न रुणत्सि दुःखम् ।
नो चेदमी जगति रङ्गधुरीण भूयः
क्षोदिष्ठभोगरसिकास्तव न स्मरेयुः ॥ 14

687 हेतुर्वैधे विमर्शे भजनवदितरत् किं त्वनुष्ठानकाले
वेद्यत्वद्रूपभेदो विविध इह स तूपायताऽन्यानपेक्षा ।
रङ्गिन् प्रारब्धभङ्गात् फलमधिकमनावृत्तिरुक्तेष्टिवत् स्यात्
नाना शब्दादिभेदात् प्रपदनभजने सूचिते सूत्रकारैः ॥ 15



688 भक्तौ रङ्गपते यथा खलु पशुच्छागादिवद्वेदन-
ध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् ।
व्यक्तयैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपण-
न्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते ॥ 16

689 विश्वासायासभूम्नोर्व्यसनभजनयोर्गौरवे को विशेषः
तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः ।
तद्भेदो रङ्गशायिन्ननितरगतितावुत्थशोकातिरेकात्
सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम् ॥ 17

690 ध्रुवमधिकृतिभेदात् कर्मवद्रङ्गशायिन्
फलति फलमनेकं त्वत्पदे भक्तिरेका ।
शरणवरणवाणी सर्वहेतुस्तथाऽसौ
कृपणभजननिष्ठा बुद्धिदौर्बल्यकाष्ठा ॥ 18

691 कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धिचिन्तनमिदं पर्यस्यति न्यस्यतां
रङ्गाधीश रमापतित्वसुभगं नारायणत्वं तव ॥ 19

692 धीकर्मभक्तिरहितस्य कदाऽप्यशक्त्या
रङ्गेश भावकलुषप्रणतिद्वयोक्तेः ।
मन्ये बलं प्रबलदुष्कृतशालिनो मे
त्वन्मूलदेशिककटाक्षनिपातमात्रम् ॥ 20

693 अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगानविदितनृपः सेवकस्यार्भकादिः
त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥ 21

694 उक्तया धनंजयविभीषणलक्ष्यया ते
प्रत्याय्य लक्ष्मणमुनेर्भवता वितीर्णम् ।
श्रुत्वा वरं तदनुबन्धमदावलिप्ते
नित्यं प्रसीद भगवन् मयि रङ्गनाथ ॥ 22

695 सकृदपि विनतानां सर्वदे सर्वदेहिनि
उपनिषदभिधेये भागधेये विधेये ।
विरमति न कदाचिन्मोहतो हा हतोऽहं
विषमविषयचिन्तामेदुरा मे दुराशा ॥ 23

696 यावज्जीवं जगति नियतं देहयात्रा भवित्री
त्यक्ताः सर्वे त्रिचतुरदिनग्लानभोगा नभोगाः ।
दत्ते रङ्गी निजमपि पदं देशिकादेशकाङ्क्षी
किं ते चिन्ते परमभिमतं खिद्यसे यत् पुनस्त्वम् ॥ 24

697 अपि मुहुरपराधैरप्रकम्प्यानुकम्पे
वहति महति योगक्षेमबृन्दं मुकुन्दे ।
मदकलुषमनीषावज्रलेपावलेपान्
अनुगुणयितुमीहे न प्रभूनप्रभूतान् ॥ 25

698 मातर्भारति मुञ्च मानुषचटून् हे देह लब्धैरलं
लुब्धद्वारदुरासिकापरिभवैस्तोषं जुषेथा मनः ।
वाचः सीमनि रङ्गधामनि महानन्दोन्नमद्भूमनि
स्वामिन्यात्मनि वेङ्कटेश्वरकवेः स्वेनार्पितोऽयं भरः ॥ 26

699 दास्यं लास्यवताऽनुमत्य मनसा रङ्गेश्वर त्वत्पदे
नित्यं किंकरवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे
भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दशाम् ॥ 27



700 त्वय्येकाञ्जलिकिंकरे तनुभृतां निर्व्याजसर्वंसहे
कल्याणात्मनि रङ्गनाथ कमलाकान्ते मुकुन्दे स्थिते ।
स्वामिन् पाहि दयस्व देहि कुशलिन् जीव प्रभो भावयेति
आलापानवलेपिषु प्रलपितुं जिह्रेति जिह्वा मम ॥ 28

701 त्वयि सति रङ्गधुर्य शरणागतकामदुघे
निरुपधिकप्रवाहकरुणापरिणाहवति ।
परिमितदेशकालफलदान् फलदाकृतिकान्
कथमधिकुर्महे विधिशिवप्रमुखानमुकान् ॥ 29

702 ओमित्यभ्युपगम्य रङ्गनृपतेऽनन्योचितां शेषतां
स्वातन्त्र्यादिमयीमपोह्य महतीमाद्यामविद्यास्थितिम् ।
नित्यासंख्यविसीमभूतिगुणयोर्यामनायासतः
सेवासंपदमिन्दिरेश युवयोरैकान्तिकात्यन्तिकीम् ॥ 30

703 आचार्याद्रङ्गधुर्य द्वयसमधिगमे लब्धसत्तं तदात्वे
विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरं यापितारब्धदेहम् ।
नीतं त्वत्कैस्त्वया वा निरवधिकदयोद्भूतबोधादिरूपं
त्वद्भोगैकस्वभोगं दयितमनुचरं त्वत्कृते मां कुरुष्व ॥ 31

704 विधानं रङ्गेशादधिगतवतो वेङ्कटकवेः
स्फुरद्वर्णं वक्त्रे परिकलयतां न्यासतिलकम् ।
इहामुत्राप्येष प्रणतजनचिन्तामणिगिरिः
स्वपर्यङ्के सेवां दिशति फणिपर्यङ्करसिकः ॥ 32

श्री - न्यासतिलकं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्री-सुदर्शनाष्टकम् - 24

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

705 प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण
जनिभयस्थानतारण जगदवस्थानकारण ।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदर्शन
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 1

706 शुभजगद्रूपमण्डन सुरगणत्रासखण्डन
शतमखब्रह्मवंन्दित शतपथब्रह्मनन्दित ।
प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 2

707 स्फुटतटिज्जालपिञ्जर पृथुतरज्वालपञ्जर
परिगतप्रत्नविग्रह पटुतरप्रज्ञदुर्ग्रह ।
प्रहरणग्राममण्डित परिजनत्राणपण्डित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 3

708 निजपदप्रीतसद्गण निरुपधिस्फीतषड्गुण
निगमनिर्व्यूढवैभव निजपरव्यूहवैभव ।
हरिहयद्वेषिदारण हरपुरप्लोषकारण
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 4



709 दनुजविस्तारकर्तन जनितमिस्राविकर्तन
दनुजविद्यानिकर्तन भजदविद्यानिवर्तन ।
अमरदृष्टस्वविक्रम समरजुष्टभ्रमिक्रम
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 5

710 प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर
विकटमायाबहिष्कृत विविधमालापरिष्कृत ।
स्थिरमहायन्त्रतन्त्रित दृढदयातन्त्रयन्त्रित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 6

711 महितसंपत्सदक्षर विहितसंपत्षडक्षर
षडरचक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित ।
विविधसंकल्पकल्पक विबुधसंकल्पकल्पक
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 7

712 भुवननेत्र त्रयीमय सवनतेजस्त्रयीमय
निरवधिस्वादुचिन्मय निखिलशक्ते जगन्मय ।
अमितविश्वक्रियामय शमितविष्वग्भयामय
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन ॥ 8

713 द्विचतुष्कमिदं प्रभूतसारं पठतां वेङ्कटनायकप्रणीतम् ।
विषमेऽपि मनोरथः प्रधावन् न विहन्येत रथाङ्गधुर्यगुप्तः ॥ 9

श्री-सुदर्शनाष्टकं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्री - षोडशायुधस्तोत्रम् - 25

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

714 स्वसंकल्पकलाकल्पैः आयुधैरायुधेश्वरः ।
जुष्टः षोडशभिर्दिव्यैः जुषतां वः परः पुमान् ॥ 1

715 यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम् ।
पातु वस्तत् परं चक्रं चक्ररूपस्य चक्रिणः ॥ 2

716 यत्प्रसूतिशतैरासन् रुद्राः परशुलाञ्छनाः ।
स दिव्यो हेतिराजस्य परशुः परिपातु वः ॥ 3

717 हेलया हेतिराजेन यस्मिन् दैत्याः समुद्धृते ।
शकुन्ता इव धावन्ति स कुन्तः पालयेत वः ॥ 4

718 दैत्यदानवमुख्यानां दण्ड्यानां येन दण्डनम् ।
हेतिदण्डेशदण्डोऽसौ भवतां दण्डयेद्द्विषः ॥ 5

719 अनन्यान्वयभक्तानां रुन्धन्नाशामतङ्गजान् ।
अनङ्कुशविहारो वः पातु हेतीश्वराङ्कुशः ॥ 6

720 संभूय शलभायन्ते यत्र पापानि देहिनाम् ।
स पातु शतवक्त्राग्निहेतिर्हेतीश्वरस्य वः ॥ 7

721 अविद्यां स्वप्रकाशेन विद्यारूपश्छिनत्ति यः ।
स सुदर्शननिस्त्रिंशः सौतु वस्तत्त्वदर्शनम् ॥ 8



722 क्रियाशक्तिगुणो विष्णोः यो भवत्यतिशक्तिमान् ।
अकुण्ठशक्तिः सा शक्तिः अशक्तिं वारयेत वः ॥ 9

723 तारत्वं यस्य संस्थाने शब्दे च परिदृश्यते ।
प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु वः ॥ 10

724 यं सात्त्विकमहंकारम् आमनन्त्यक्षसायकम् ।
अव्याद्वश्चक्ररूपस्य तद्धनुः शार्ङ्गधन्वनः ॥ 11

725 आयुधेन्द्रेण येनैव विश्वसर्गो विरच्यते ।
स वः सौदर्शनः कुर्यात् पाशः पाशविमोचनम् ॥ 12

726 विहारो येन देवस्य विश्वक्षेत्रकृषीवलः ।
व्यज्यते तेन सीरेण नासीरविजयोऽस्तु वः ॥ 13

727 आयुधानामहं वज्रम् इत्यगीयत यः स वः ।
अव्याद्धेतीशवज्रोऽसौ अदधीच्यस्थिसंभवः ॥ 14

728 विश्वसंहृतिशक्तिर्या विश्रुता बुद्धिरूपिणी ।
सा वः सौदर्शनी भूयात् गदप्रशमनी गदा ॥ 15

729 यात्यतिक्षोदशालित्वं मुसलो येन तेन वः ।
हेतीशमुसलेनाशु भिद्यतां मोहमौसलम् ॥ 16

730 शूलिदृष्टमनोर्वाच्यो येन शूलयति द्विषः ।
भवतां तेन भवतात् त्रिशूलेन विशूलता ॥ 17

731 अस्त्रग्रामस्य कृत्स्नस्य प्रसूतिं यं प्रचक्षते ।
सोऽव्यात् सुदर्शनो विश्वम् आयुधैः षोडशायुधः ॥ 18

732 श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् ।
कृतेयमायुधेन्द्रस्य षोडशायुधसंस्तुतिः ॥ 19

श्री षोडशायुधस्तोत्रं समाप्तम्

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

## श्री - गरुडदण्डकः - 26

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

733 नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने ।
श्रुतिसिन्धुसुधोत्पादमन्दराय गरुत्मते ॥

734 गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठ-पीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोपगूढ स्फु-रत्कण्टकव्रात वेधव्यथावेपमान द्विजिह्वाधिपाकल्पविष्फार्यमाण स्फटा-वाटिका रत्नरोचिश्छटा राजिनीराजितं कान्तिकल्लोलिनीराजितम्

2 जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पति-क्षिप्तदम्भोळिधाराकिणाकल्प कल्पान्तवातूल कल्पोदयानल्प वीरायितो-द्यच्चमत्कार दैत्यारि जैत्रध्वजारोहनिर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादिमूर्ते न कश्चित् समस्ते नमस्ते पुनस्ते नमः ।



3 नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधि वीचीचपेटाहतागाधपाताळभांकारसंक्रुद्धनागेन्द्रपीडा सृणीभावभास्वन्नख-श्रेणये चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यमध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे

4 मनुरनुगत पक्षिवक्त्र स्फुरत्तारकस्तावकश्चित्रभानुप्रियाशेखरस्त्रायतां नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन् वलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञाव-तीर्ण स्थिरां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्द-दोग्ध्रीं दधीथा मुधाकामहीनामहीनामहीनान्तक ॥

735 षट्त्रिंशद्गणचरणो नरपरिपाटीनवीनगुम्भगणः ।
विष्णुरथदण्डकोऽयं विघटयतु विपक्षवाहिनीव्यूहम् ॥ 3

736 विचित्रसिद्धिदः सोऽयं वेङ्कटेशविपश्चिता ।
गरुडध्वजतोषाय गीतो गरुडदण्डकः ॥ 4

श्री गरुडदण्डकः समाप्तः

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्री - गरुडपञ्चाशत् - 27

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

737 अङ्गेष्वानन्दमुख्यश्रुतिशिखरमिळद्दण्डकं गण्डपूर्वं
प्रागेवाभ्यस्य षट्सु प्रतिदिशमनघं न्यस्तशुद्धास्त्रबन्धाः ।
पक्षिव्यत्यस्तपक्षिद्वितयमुखपुटप्रस्फुटोदारतारं
मन्त्रं गारुत्मतं तं हुतवहदयिताशेखरं शीलयामः ॥ 1

738 वेदः स्वार्थाधिरूढो बहिरबहिरभिव्यक्तिमभ्येति यस्यां
सिद्धिः सांकर्षणी सा परिणमति यया सापवर्गस्त्रिवर्गा ।
प्राणस्य प्राणमन्यं प्रणिहितमनसो यत्र निर्धारयन्ति
प्राची सा ब्रह्मविद्या परिचितगहना पातु गारुत्मती नः ॥ 2

739 नेत्रं गायत्रमूचे त्रिवृदिति च शिरो नामधेयं यजूंषि
छन्दांस्यङ्गानि धिष्ण्यात्मभिरजनि शफैर्विग्रहो वामदेव्यम् ।
यस्य स्तोमात्मनोऽसौ बृहदितरगरुत् तादृशाम्नातपुच्छः
स्वाच्छन्द्यं नः प्रसूतां श्रुतिशतशिखराभिष्टुतात्मा गरुत्मान् ॥ 3

740 यो यं धत्ते स्वनिष्ठं वहनमपि वरः स्पर्शितो येन यस्मै
यस्माद्यस्याहवश्रीर्विदधति भजनं यत्र यत्रेति सन्तः ।
प्रायो देवः स इत्थं हरिगरुडभिदाकल्पितारोहवाह-
स्वाभाव्यः स्वात्मभव्यः प्रदिशतु शकुनिर्ब्रह्मसब्रह्मतां नः ॥ 4



741 एको विष्णोर्द्वितीयस्त्रिचतुरविदितं पञ्चवर्णीरहस्यं
षाड्गुण्यस्मेरसप्तस्वरगतिरणिमाद्यष्टसंपन्नवात्मा ।
देवो दर्वीकरारिर्दशशतनयनारातिसाहस्रलक्षे
विक्रीडत्पक्षकोटिर्विघटयतु भयं वीतसंख्योदयो नः ॥ 5

742 सत्याद्यैः सात्वतादिप्रथितमहिमभिः पञ्चभिर्व्यूहभेदैः
पञ्चाग्निध्यो निरुन्धन् भवगरळभवं प्राणिनां पञ्चभावम् ।
प्राणापानादिभेदात् प्रतितनु मरुतो दैवतं पञ्चवृत्तेः
पञ्चात्मा पञ्चधाऽसौ पुरुष उपनिषद्घोषितस्तोषयेन्नः ॥ 6

743 श्लिष्यद्भोगीन्द्रभोगे श्रुतिनिकरनिधौ मूर्तिभेदे स्वकीये
वर्णव्यक्तीर्विचित्राः परिकलयति यो वक्त्रबाहूरुपादैः ।
प्राणः सर्वस्य जन्तोः प्रकटितपरमब्रह्मभावः स इत्थं
क्लेशं छिन्दन् खगेशः सपदि विपदि नः सन्निधिः संनिधत्ताम् ॥

744 अग्रे तिष्ठन्नुदग्रो मणिमुकुर इवानन्यदृष्टेर्मुरारेः
पायान्मायाभुजङ्गीविषमविषभयाद्गाढमस्मान् गरुत्मान् ।
क्षुभ्यत्क्षीराब्धिपाथःसहभवगरळस्पर्शशङ्की स शङ्के
छायां धत्ते यदीयां हृदि हरिहृदयारोहधन्यो मणीन्द्रः ॥ 8

745 आहर्तारं सुधाया दुरधिगममहाचक्रदुर्गस्थितायाः
जेतारं वज्रपाणेः सह विबुधगणैराहवे बाहुवेगात् ।
विष्णौ संप्रीयमाणे वरविनिमयतो विश्वविख्यातकीर्तिं
देवं याऽसूत साऽसौ दिशतु भगवती शर्म दाक्षायणी नः ॥ 9

746 विलासाद्वीतिहोत्रं प्रथममधिगतैरन्तिके मन्दधाम्ना
भूयस्तेनैव सार्धं भयभरतरळैर्वन्दितो देववृन्दैः ।
कल्पान्तक्षोभदक्षं कथमपि कृपया संक्षिपन् धाम चण्डं
भित्त्वाऽण्डं निर्जिहानो भवभयमिह नः खण्डयत्वण्डजेन्द्रः ॥ 10

747 क्षुण्णक्षोणीधराणि क्षुभितचतुरकूपारतिम्यद्दरुन्ति
त्रुट्यत्तारासराणि स्थपुटितविबुधस्थानकानि क्षिपेयुः ।
पाताळब्रह्मसौधावधिविहितमुधावर्तनान्यस्मदार्तिं
ब्रह्माण्डस्यान्तराळे बृहति खगपतेरर्भकक्रीडितानि ॥ 11

748 संविच्छस्त्रं दिशन्त्या सह विजयचमूराशिषः प्रेषयन्त्या
संबध्नन्त्या तनुत्रं सुचरितमशनं पक्कणं निर्दिशन्त्या ।
एनोऽस्मद्वैनतेयो नुदतु विनतया क्लृप्तरक्षाविशेषः
कद्रूसंकेतदास्यक्षपणपणसुधालक्षभैक्षं जिघृक्षुः ॥ 12

749 विक्षेपैः पक्षतीनामनिभृतगतिभिर्वादितव्योमतूर्यः
वाचालाम्भोधिवीचीवलयविरचितालोकशब्दानुबन्धः ।
दिक्कन्याकीर्यमाणक्षरदुडुनिकरव्याजलाजाभिषेकः
नाकोन्माथाय गच्छन् नरकमपि स मे नागहन्ता निहन्तु ॥ 13

750 ऋक्षाक्षक्षेपदक्षो मिहिरहिमकरोत्तालताळाभिघाती
वेलावाःकेळिलोलो विविधघनघटाकन्दुकाघातशीलः ।
पायान्नः पातकेभ्यः पतगकुलपतेः पक्षविक्षेपजातः
वातः पाताळहेलापटहपटुरवारम्भसंरम्भधीरः ॥ 14

751 किं निर्घातः किमर्कः परिपतति दिवः किं समिद्धोऽयमौर्वः
किंस्वित् कार्तस्वराद्रिर्ननु विदितमिदं व्योमवर्त्मा गरुत्मान् ।
आसीदत्याजिहीर्षत्यभिपतति हरत्यत्ति हा तात हाऽम्बेति
आलापोद्युक्तभिल्लाकुलजठरपुटः पातु नः पत्त्रिनाथः ॥ 15

752 आसृक्व्यात्तैरसृग्भिर्दुरुपशमतृषाशातनी शातदंष्ट्रा-
कोटीलोटत्करोटीविकटकटकटारावघोरावतारा ।
भिन्द्यात् सार्धं पुळिन्द्या सपदि परिहृतब्रह्मका जिह्मगारेः
उद्वेलद्भिल्लपल्लीनिगरणकरणा पारणा कारणां नः ॥ 16



753 स्वच्छन्दस्वर्गिबृन्दप्रथमतममहोत्पातनिर्घातघोरः
स्वान्तध्वान्तं निरुन्ध्याद्द्रुतधरणिपयोराशिराशीविषारेः ।
प्रत्युद्यद्भिल्लपल्लीभटरुधिरसरिल्लोलकल्लोलमाला-
हालानिर्वेशहेलाहलहलबहुळो हर्षकोलाहलो नः ॥ 17

754 सान्द्रक्रोधानुबन्धात् सरसि नखमुखे पादपे गण्डशैले
तुण्डाग्रे कण्ठरन्ध्रे तदनु च जठरे निर्विशेषं युयुत्सू ।
अव्यादस्मानभव्यादविदितनखरश्रेणिदंष्ट्राभिघातौ
जीवग्राहं गृहीत्वा कमठकरटिनौ भक्षयन् पक्षिमल्लः ॥ 18

755 अल्पः कल्पान्तलीलानटमकुटसुधासूतिखण्डो बहूनां
निःसारस्त्वद्भुजाद्रेरनुभवतु मुधा मन्थनं त्वेष सिन्धुः ।
राकाचन्द्रस्तु राहोः स्वमिति कथयतः प्रेक्ष्य कद्रूकुमारान्
सान्तर्हासं खगेन्द्रः सपदि हृतसुधस्त्रायतामायतान्नः ॥ 19

756 आरादभ्युत्थितैरावतममितजवोदश्वदुच्चैःश्रवस्कं
जातक्षोभं विमथ्नन् दिशि दिशि दिविषद्वाहिनीशं क्षणेन ।
भ्राम्यन् सव्यापसव्यं सुमहति मिषति स्वर्गिसार्थे सुधार्थं
प्रेङ्खन्नेत्रः श्रियं नः प्रकटयतु चिरं पक्षवान् मन्थशैलः ॥ 20

757 अस्थानेषु ग्रहाणामनियतविहितानन्तवक्रातिचाराः
विश्वोपाधिव्यवस्थाविगमविलुळितप्रागवागादिभेदाः ।
द्वित्राः सुत्रामभक्तग्रहकलहविधावण्डजेन्द्रस्य चण्डाः
पक्षोत्क्षेपा विपक्षक्षपणसरभसाः शर्म मे निर्मिमीरन् ॥ 21

758 तत्तत्प्रत्यर्थिसारावधिविहितमृषारोषगन्धो रुषाऽन्धैः
एकः क्रीडन्ननेकैः सुरपतिसुभटैरक्षतो रक्षतान्नः ।
अन्योन्याबद्धलक्षापहरणविहितामन्दमात्सर्यतुङ्गैः
अङ्गैरेव स्वकीयैरहमहमिकया मानितो वैनतेयः ॥ 22

759 अस्तव्योमान्तमन्तर्हितनिखिलहरिन्मण्डलं चण्डभानोः
लुण्टाकैर्यैरकाण्डे जगदखिलमिदं शर्वरी वर्वरीति ।
प्रेङ्खोळत्स्वर्गगोळः स्खलदुडुनिकरस्कन्धबन्धान् निरुन्धन्
रंहोभिस्तैर्मदंहो हरतु तरळितब्रह्मसद्मा गरुत्मान् ॥ 23

760 यः स्वाङ्गे संगरान्तर्गरुदनिललवस्तम्भिते जम्भशत्रौ
कुण्ठास्त्रे सन्नकण्ठं प्रणयति पवये पक्षलेशं दिदेश ।
सोऽस्माकं संविधत्तां सुरपतिपृतनाद्वन्द्वयुद्धैकमल्लः
माङ्गळ्यं वालखिल्यद्विजवरतपसां कोऽपि मूर्तो विवर्तः ॥ 24

761 रुद्रान् विद्राव्य सेन्द्रान् हुतवहसहितं गन्धवाहं गृहीत्वा
कालं निष्काल्य धूत्वा निर्ऋतिधनपती पाशिनं क्लेशयित्वा ।
सर्पाणां छाद्मिकानाममृतमयपणप्रापणप्राप्तदर्पः
निर्बाधं क्वापि सर्पन्नपहरतु हरेरौपवाह्यो मदंहः ॥ 25

762 भुग्नभ्रूभ्रूकुटीभृद्भ्रमदमितगरुत् क्षोभितक्ष्मान्तरिक्षः
चक्राक्षो वक्रतुण्डः खरतरनखरः क्रूरदंष्ट्राकराळः ।
पायादस्मानपायाद्भयभरविगळद्दन्दशूकेन्द्रशूकः
शौरेः संक्रन्दनादिप्रतिभटपृतनाक्रन्दनः स्यन्दनेन्द्रः ॥ 26

763 अर्यम्णा धुर्ययोक्त्रग्रसनभयभृता सान्त्वितोऽनूरुबन्धात्
कोदण्डज्यां जिघृक्षेदिति चकितधिया शङ्कितः शंकरेण ।
तल्पे कल्पेत मा ते मतिरिति हरिणाऽप्यादरेणानुनीतः
पक्षीन्द्रस्त्रायतां नः फणधरमहिषीपत्रभङ्गापहारी ॥ 27

764 छायातार्क्ष्यानहीनां फणमणिमुकुरश्रेणिविस्पष्टबिम्बान्
त्राणापेक्षाधृतस्वप्रतिकृतिमनसा वीक्ष्य जातानुकम्पः ।
तेषां दृष्ट्वाऽथ चेष्टाः प्रतिगरुडगणाशङ्कया तुङ्गरोषः
सर्पन् दर्पोद्धतो नः शमयतु दुरितं सर्पसंतानहन्ता ॥ 28



765 उच्छ्वासाकृष्टतारागणघटितमृषामौक्तिकाकल्पशिल्पः
पक्षव्याधूतपाथोनिधिकुहरगुहागर्भदत्तावकाशः ।
दृष्टिं दंष्ट्राग्रदूतीं पृथुषु फणभृतां प्रेषयन्नुत्तमाङ्गेषु
अङ्गैरङ्गानि रुन्धन्नवतु पिपतिषुः पत्रिणामग्रणीर्नः ॥ 29

766 आवेधःसौधशृङ्गादनुपरतगतेराभुजङ्गेन्द्रलोकात्
श्रेणीबन्धं वितन्वन् क्षणपरिणमितालातपातप्रकारः ।
पायान्नः पुण्यपापप्रचयमयपुनर्गर्भकुम्भीनिपातात्
पाताळस्यान्तराळे बृहति खगपतेर्निर्विघातो निपातः ॥ 30

767 प्रत्यग्राकीर्णतत्तत्फणमणिनिकरे शङ्कुलाकोटिवक्रं
तुण्डाग्रं संक्ष्णुवानः कुलगिरिकठिने कर्परे कूर्मभर्तुः ।
पाताळक्षेत्रपक्षद्विरसनपृतनाशालिविच्छेदशाली
शैलीं नः सप्तशैलीलघिमदरभसः सौतु साध्वीं सुपर्णः ॥ 31

768 पर्यस्यत् पन्नगीनां युगपदसमयानर्भकान् गर्भकोशात्
ब्रह्मस्तम्बप्रकम्पव्यतिषजदखिलोदन्वदुन्निद्रघोषम् ।
चक्षुश्चक्षुःश्रुतीनां सपदि बधिरयत् पातु पक्षीश्वरस्य
क्षिप्रक्षिप्तक्षमाभृत् क्षणघटितनभःस्फोटमास्फोटितं नः ॥ 32

769 तोयस्कन्धो न सिन्धोः समघटत मिथः पक्षविक्षेपभिन्नः
पाताळं न प्रविष्टं पृथुनि च विवरे रश्मिभिस्तिग्मरश्मेः ।
तावद्ग्रस्ताहिवक्त्रक्षरितविषमषीपङ्ककस्तूरिकाङ्कः
प्रत्यायातः स्वयूथ्यैः स्थित इति विदितः पातु पत्रीश्वरो नः ॥ 33

770 बद्धस्पर्धैरिव स्वैर्बहुभिरभिमुखैरेककण्ठं स्तुवाने
तत्तद्विश्वोपकारप्रणयिसुरगणप्रार्थितप्राणरक्षे ।
पायान्नः प्रत्यहं ते कमपि विषधरं प्रेषयामीति भीते
संधित्सौ सर्पराजे सकरुणमरुणानन्तरं धाम दिव्यम् ॥ 34

771 क्वाप्यस्थ्ना शर्कराढ्यं क्वचन घनतरासृक्छटाशीधुदिग्धं
निर्मोकैः क्वापि कीर्णं विषयमपरतो मण्डितं रत्नखण्डैः ।
अध्यारूढैः स्ववारेष्वहमहमिकया वध्यवेषं दधानैः
काले खेलन् भुजङ्गैः कलयतु कुशलं काद्रवेयान्तको नः ॥ 35

772 वामे वैकुण्ठशय्याफणिपतिकटको वासुकिर्ब्रह्मसूत्रः
रक्षेन्नस्तक्षकेण ग्रथितकटितटश्चारुकार्कोटहारः ।
पद्मं कर्णेऽपसव्ये प्रथिमवति महापद्ममन्यत्र बिभ्रत्
चूडायां शङ्खपालं गुळिकमपि भुजे दक्षिणे पक्षिमल्लः ॥ 36

773 वर्त्याभस्वस्तिकाग्रस्फुरदरुणशिखादीप्ररत्नप्रदीपैः
बध्नद्भिस्तापमन्तर्बहुळविषमषीगन्धतैलाभिपूर्णैः ।
नित्यं नीराजनार्थं निजफणफलकैर्घूर्णमानानि तूर्णं
भोगैरापूरयेयुर्भुजगकुलरिपोर्भूषणानीषणां नः ॥ 37

774 अङ्गप्रत्यङ्गलीनामृतरसविसरस्पर्शलोभादिवान्त-
स्त्रासाद्ध्रासानुबन्धादिव सहजमिथोवैरशङ्कोत्तरङ्गात् ।
रुद्रागाढोपगूढोच्छ्वसननिबिडितस्थानयोगादिवास्म-
द्भद्राय स्युर्भजन्तो भगवति गरुडे गाढतां गूढपादः ॥ 38

775 कोटीरे रत्नकोटिप्रतिफलिततया नैकधा भिन्नमूर्तिः
वल्मीकस्थान् स्वयूथ्यानभित इव निजैर्वेष्टनैः क्लृप्तरक्षः ।
क्षेमं नः सौतु हेमाचलविधृतशरन्मेघलेखानुकारी
रोचिश्चूडालचूडामणिरुरगरिपोरेष चूडाभुजङ्गः ॥ 39

776 द्राघीयःकर्णपाशद्युतिपरिभवनव्रीडयेव स्वभोगं
संक्षिप्याश्नन् समीरं दरविनतमुखो निःश्वसन् मन्दमन्दम् ।
आसीदद्गण्डभित्तिप्रतिफलनमिषात् क्वापि गूढं विविक्षुः
क्षिप्रं दोषान् क्षिपेन्नः खगपतिकुहनाकुण्डलः कुण्डलीन्द्रः ॥ 40



777 व्याळग्रग्रन्थिबन्धग्रथितपृथुशिरोरत्नसंदर्शनीयः
मुक्ताशुभ्रोदराभो हरिमणिशकलश्रेणिदृश्येतरांशः ।
विष्वग्दम्भोळिधाराव्रणकिणविषमोत्तम्भनस्तब्धवृत्तिः
व्याळाहारस्य हृद्यो हरतु स मदघं हारदर्वीकरेन्द्रः ॥ 41

778 वैकक्ष्यस्रग्विशेषच्छुरणपरिणमच्छन्नबन्धानुबन्धः
वक्षःपीठाधिरूढो भुजगदमयितुर्ब्रह्मसूत्रायमाणः ।
अश्रान्तस्वैरनिद्राविरचितविविधोच्छ्वासनिःश्वासवेग-
क्षामोच्छूनाकृतिर्नः क्षपयतु दुरितं कोऽपि कद्रूकुमारः ॥ 42

779 श्लिष्यद्रुद्रासुकीर्तिस्तनतटघुसृणालेपसंक्रान्तसार-
स्फारामोदाभिलाषोन्नमितपृथुफणाचक्रवाळाभिरामः ।
प्रायः प्रेयःपटीरद्रुमविटपधिया श्लिष्टपक्षीन्द्रबाहुः
व्याहन्यादस्मदीयं वृजिनभरमसौ बृन्दशो दन्दशूकः ॥ 43

780 ग्रस्तानन्तर्निविष्टान् फणिन इव शुचा गाढमाश्लिष्य दुःस्यन्
क्षुण्णानेकः स्वबन्धून् क्षुधमिव कुपितः पीडयन् वेष्टनेन ।
व्याळस्तार्क्ष्योदरस्थो विपुलगळगुहावाहिफूत्कारवात्या-
पौनःपुन्येन हन्यात् पुनरुदरगुहागेहवास्तव्यतां नः ॥ 44

781 गाढासक्तो गरुत्मत्कटितटनिकटे रक्तचण्डातकाङ्के
फक्कत्काञ्चीमहिम्ना फणमणिमहसा लोहिताङ्गो भुजङ्गः ।
सत्तासांसिद्धिकं नः सपदि बहुविधं कर्मबन्धं निरुन्ध्यात्
विन्ध्याद्र्यालीनसंध्याघनघटिततटित्कान्तिचातुर्यधुर्यः ॥ 45

782 वेगोत्तानं वितानं व्यजनमनुगुणं वैजयन्ती जयन्ती
मित्रं नित्याभ्यमित्रं युधि विजयरथो युग्ययोगानपेक्षः ।
दासो निष्पर्युदासो दनुतनयभिदो निःसहायः सहायः
दोधूयेतास्मदीयं दुरितमधरितारातिपक्षैः स्वपक्षैः ॥ 46

783 उक्षा दक्षान्तकस्य स्खलति वलजितः कुञ्जरः खञ्जरीतिः
क्लान्तो धातुः शकुन्तोऽनुग इति दयया सामिरुद्धस्यदोऽपि ।
ग्राहग्रस्तद्विपेन्द्रक्षतिभयचकिताकुण्ठवैकुण्ठचिन्ता-
नासीरोदारमूर्तिर्नरकविहतये स्ताद्विहङ्गेश्वरो नः ॥ 47

784 वेगोद्वेलः सुवेले किमिदमिति मिथो मन्त्रितो वानरेन्द्रैः
मायामानुष्यलीलामभिनयति हरौ लब्धसेवाविशेषः ।
वैदेहीकर्णपूरस्तबकसुरभिणा यः समाश्लेषि दोष्णा
तृष्णापारिप्लवानां स भवतु गरुडो दुःखवारिप्लवो नः ॥ 48

785 दुग्धोदन्वत्प्रभूतः स्वकमहिमपृथुर्विष्णुना कृष्णनाम्ना
पिञ्छाकल्पानुकल्पः समघटि सुदृढो यत्प्रदिष्टः किरीटः ।
वीरो वैरोचनास्त्रव्रणकिणगुणितोदग्रनिर्घातघातः
संघातं सर्पघाती स हरतु महतामस्मदत्याहितानाम् ॥ 49

786 रुन्ध्यात् संवर्तसंध्याघनपटलकनत्पक्षविक्षेपहेला-
वातूलास्फालतूलाञ्चलनिचयतुलाधेयदैतेयलोकः ।
आस्माकैः कर्मपाकैरभिगतमहितानीकमप्रत्यनीकैः
दीव्यन् दिव्यापदानैर्दनुजविजयिनो वैजयन्तीशकुन्तः ॥ 50

787 यत्पक्षस्था त्रिवेदी त्रिगुणजलनिधिर्लङ्घ्यते यद्गुणज्ञैः
वर्गस्त्रैवर्गिकाणां गतिमिह लभते नाथवद्यत्सनाथः ।
त्रैकाल्योपस्थितात् स त्रियुगनिधिरघादायतात् त्रायतां नः
त्रातानेकत्रिधाम्नस्त्रिदशरिपुचमूमोहनो वाहनेन्द्रः ॥ 51



788 सैकां पञ्चाशतं यामतनुत विनतानन्दनं नन्दयिष्यन्
कृत्वा मौळौ तदाज्ञां कविकथकघटाकेसरी वेङ्कटेशः ।
तामेतां शीलयन्तः शमितविषधरव्याधिदैवाधिपीडाः
काङ्क्षापौरस्त्यलाभाः कृतमितरफलैस्तार्क्ष्यकल्पा भवन्ति ॥ 52

श्री - गरुडपञ्चाशत् समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः

# श्री - यतिराजसप्ततिः - 28

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

---

789 कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम् ।
प्रवक्ता च्छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥ 1

790 सहधर्मचरीं शौरेः संमन्त्रितजगद्धिताम् ।
अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहाम् ॥

791 वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम् ।
यद्वेत्रशिखरस्पन्दे विश्वमेतद्व्यवस्थितम् ॥ 3

792 यस्य सारस्वतं स्रोतो वकुलामोदवासितम् ।
श्रुतीनां विश्रमायालं शठारिं तमुपास्महे ॥ 4

793 नाथेन मुनिना तेन भवेयं नाथवानहम् ।
यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥ 5

794 नमस्याम्यरविन्दाक्षं नाथभावे व्यवस्थितम् ।
शुद्धसत्त्वमयं शौरेः अवतारमिवापरम् ॥ 6

795 अनुज्झितक्षमायोगम् अपुण्यजनबाधकम् ।
अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥ 7

796 विगाहे यामुनं तीर्थं साधुबृन्दावने स्थितम् ।
निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥ 8

797 दयानिघ्नं यतीन्द्रस्य देशिकं पूर्णमाश्रये ।
येन विश्वसृजो विष्णोः अपूर्यत मनोरथः ॥ 9

798 प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् ।
प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुतिम् ॥ 10

799 उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ।
शरणागतसार्थवाहमीडे शिखया शेखरिणं पतिं यतीनाम् ॥ 11

800 प्रथयन् विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः ॥
अपृथक्प्रतिपन्नयन्मयत्वैः ववृधे पञ्चभिरायुधैर्मुरारेः ॥ 12

801 शमितोदयशंकरादिगर्वः स्वबलादुद्धृतयादवप्रकाशः ।
अवरोपितवान् श्रुतेरपार्थान् ननु रामावरजः स एष भूयः ॥ 13

802 अबहुश्रुतसंभवं श्रुतीनां जरतीनामयथायथप्रचारम् ।
विनिवर्तयितुं यतीश्वरोक्तिः विदधे ताः स्थिरनीतिपञ्जरस्थाः ॥ 14

803 अमुना तपनातिशायिभूम्ना यतिराजेन निबद्धनायकश्रीः ।
महती गुरुपङ्क्तिहारयष्टिः विबुधानां हृदयंगमा विभाति ॥ 15



804 अद्धनपक्षस्य यतिक्षमाभृतः विभाति वंशे हरितत्त्वमक्षतम् ।
यदुद्भवाः शुद्धसुवृत्तशीतळाः भवन्ति मुक्तावळिभूषणं भुवः ॥ 16

805 अनपायविष्णुपदसंश्रयं भजे कलया कयाऽपि कलयाऽप्यनुज्झितम् ।
अकळङ्कयोगमजडाशयोदितं यतिराजचन्द्रमुपरागदूरगम् ॥ 17

806 अभिगम्य सम्यगनघाः सुमेधसः यतिचक्रवर्तिपदपद्मपत्तनम् ।
हरिभक्तदास्यरसिकाः परस्परं क्रयविक्रयार्हदशया समिन्धते ॥ 18

807 परुषातिवादपरिवादपैशुनप्रभृतिप्रभूतपतनीयपङ्किला ।
स्वदते ममाद्य सुभगा सरस्वती यतिराजकीर्तिकतकैर्विशोधिता ॥ 19

808 अनुकल्पभूतमुरभित्पदं सताम् अजहत्त्रिवर्गमपवर्गवैभवम् ।
चलचित्तवृत्तिविनिवर्तनौषधं शरणं यतीन्द्रचरणं वृणीमहे ॥ 20

809 श्वसितावधूतपरवादिवैभवाः
निगमान्तनीतिजलधेस्तलस्पृशः ।
प्रतिपादयन्ति गतिमापवर्गिकीं
यतिसार्वभौमपदसात्कृताशयाः ॥ 21

810 मूले निविश्य महतां निगमद्रुमाणां
मुष्णन् प्रतारकभयं धृतनैकदण्डः ।
रङ्गेशभक्तजनमानसराजहंसः
रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ 22

811 सन्मन्त्रवित् क्षिपति संयमिनां नरेन्द्रः
संसारजिह्मगमुखैः समुपस्थितं नः ।
विष्वक्ततं विषयलोभविषं निजाभिः
गाढानुभावगरुडध्वजभावनाभिः ॥ 23

812 नाथः स एष यमिनां नखरश्मिजालैः
अन्तर्निलीनमपनीय तमो मदीयम् ।
विज्ञानचित्रमनघं लिखतीव चित्ते
व्याख्यानकेळिरसिकेन कराम्बुजेन ॥ 24

813 उद्गृह्णतीमुपनिषत्सु निगूढमर्थं
चित्ते निवेशयितुमल्पधियां स्वयं नः ।
पश्येम लक्ष्मणमुनेः प्रतिपन्नहस्ताम्
उन्निद्रपद्मसुभगामुपदेशमुद्राम् ॥ 25

814 आकर्षणानि निगमान्तसरस्वतीनाम्
उच्चाटनानि बहिरन्तरुपप्लवानाम् ।
पथ्यानि घोरभवसंज्वरपीडितानां
हृद्यानि भान्ति यतिराजमुनेर्वचांसि ॥ 26

815 शीतस्वभावसुभगानुभवः शिखावान्
दोषावमर्दनियतोन्नतिरोषधीशः ।
तापानुबन्धशमनस्तपनः प्रजानां
रामानुजो जयति संवलितत्रिधामा ॥ 27

816 जयति सकलविद्यावाहिनीजन्मशैलः
जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यः
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ 28

817 मुनिबहुमतसारा मुक्तिनिश्रेणिकेयं
सहृदयहृदयानां शाश्वती दिष्टसिद्धिः ।
शमितदुरितगन्धा संयमीन्द्रस्य सूक्तिः
परिचितगहना नः प्रस्नुवीत प्रसादम् ॥ 29



818 भवमरुपरिखिन्नस्फीतपानीयसिन्धुः
दुरितरहितजिह्वादुग्धकुल्यासकुल्या ।
श्रुतिनयनसनाभिः शोभते लक्ष्मणोक्तिः
नरकमथनसेवास्वादनाडिंधमा नः ॥ 30

819 हरिपदमकरन्दस्यन्दिनः संश्रितानाम्
अनुगतबहुशाखास्तापमुन्मूलयन्ति ।
शमितदुरितगन्धाः संयमीन्द्रप्रबन्धाः
कथकजनमनीषाकल्पनाकल्पवृक्षाः ॥ 31

820 नानाभूतैर्जगति समयैर्नर्मलीलां विधित्सोः
अन्त्यं वर्णं प्रथयति विभोरादिमव्यूहभेदे ।
विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहः सन्
विष्वक्सेनो यतिपतिरभूद्वेत्रसारस्त्रिदण्डः ॥ 32

821 लक्ष्यं बुद्धे रसिकरसनालास्यलीलानिदानं
शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः ।
लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नैः
लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥ 33

822 स्थितिमवधीरयन्त्यतिमनोरथसिद्धिमतीं
यतिपतिसंप्रदायनिरपायधनोपचिताः ।
मधुकरमौळिदघ्नमददन्तुरदन्तिघटा-
करटकटाहवाहिघनशीकरशीभरिताम् ॥ 34

823 निरुपधिरङ्गवृत्तिरसिकानभिताण्डवयन्
निगमविमर्शकेळिरसिकैर्निभृतैर्विधृतः ।
गुणपरिणद्धसूक्तिदृढकोणविघट्टनया
रटति दिशामुखेषु यतिराजयशःपटहः ॥ 35

824 इदंप्रथमसंभवत्कुमतिजालकूलङ्कषाः
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयः
चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ 36

825 सुधाशनसुदुर्ग्रहश्रुतिसमष्टिमुष्टिन्धयः
कथाहवमसौ गतान् कपटसौगतान् खण्डयन् ।
मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा
मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥ 37

826 कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तत् द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ 38

827 कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदं जगत् प्रगुणितं यतीन्द्रोक्तिभिः ॥ 39

828 कथाकलहकौतुकग्रहगृहीतकौतस्कुत-
प्रथा जलधिसंप्लवग्रसनकुम्भसंभूतयः ।
जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासना-
प्रभावपरिपक्त्रिमप्रमितिभारतीसंपदः ॥ 40

829 यतीश्वरसरस्वतीसुरभिताशयानां सतां
वहामि चरणाम्बुजं प्रणतिशालिना मौळिना ।
तदन्यमददुर्मदज्वलितचेतसां वादिनां
शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ 41



830 भजस्व यतिभूपतेरनिदमादिदुर्वासना-
कदध्वपरिवर्तनश्रमनिवर्तनीं वर्तनीम् ।
लभस्व हृदय स्वयं रथपदायुधानुग्रह-
द्रुतप्रहृतिनिस्त्रुटद्दुरितदुर्वृतिं निर्वृतिम् ॥ 42

831 कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर-
ग्रहिळमनसः पश्यन्त्यल्पां यतीश्वरभारतीम् ।
विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः
कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥ 43

832 स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं
कुमतिफणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा ।
रसपरिमळश्लाघाघोषस्फुटत्पुटभेदनं
लवणवणिजः कर्पूरार्घं किमित्यभिमन्त्रते ॥ 44

833 वहति महिळामाद्यो वेधास्त्रयीमुखरैर्मुखैः
वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपीजनस्य वशंवदं
मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः ॥ 45

834 निगमपथिकच्छायाशाखी निराशमहानिधिः
महितविविधच्छात्रश्रेणीमनोरथसारथिः ।
त्रिभुवनतमःप्रत्यूषोऽयं त्रिविद्यशिखामणिः
प्रथयति यतिक्ष्माभृत् पारावरीमविपर्ययाम् ॥ 46

835 जडमतिमुधादन्तादन्तिव्यथौषधसिद्धयः
प्रमितिनिधयः प्रज्ञाशालिप्रपालनयष्टयः ।
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदाः
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥ 47

836 प्रतिकलमिह प्रत्यक्तत्त्वावलोकनदीपिकाः
यतिपरिबृढग्रन्थाश्विन्तां निरन्तरयन्ति नः ।
अकलुषपरज्ञानौत्सुक्यक्षुधातुरदुर्दशा-
परिणतफलप्रत्यासीदत्फलेग्रहिसुग्रहाः ॥ 48

837 मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभाः
मुमुक्षामक्षोभ्यां ददति मुनिबृन्दारकगिरः ।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिष-
द्दिवामीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ 49

838 निराबाधा बोधायनफणितिनिष्यन्दसुभगाः
विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः ।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखैः
अनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम् ॥ 50

839 विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथकवेतण्डपृतना-
वियातव्यापारव्यतिमथनसंरम्भकलहः ॥ 51

840 प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषां
परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिरां
प्रसक्तिं संवित्तेः प्रदिशति यतीशानफणितिः ॥ 52

841 हतावद्ये द्वये हरिचरणपङ्केरुहयुगे
निबध्नन्त्यैकान्त्यं किमपि यतिभूभृत्फणितयः ।
शुनासीरस्कन्दद्रुहिणहरहेरम्बहुतभुक्-
प्रभेशादिक्षुद्रप्रणतिपरिहारप्रतिभुवः ॥ 53



842 यथाभूतस्वार्था यतिनृपतिसूक्तिर्विजयते
सुधासंदोहाब्धिः सुचरितविपक्तिः श्रुतिमताम् ।
कथादप्यत्कौतस्कुतकलहकोलाहलहत-
त्रिवेदीनिर्वेदप्रशमनविनोदप्रणयिनी ॥ 54

843 श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते
स्वपक्षस्थान् दोषान् वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुळं
गळद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥ 55

844 निरालोके लोके निरुपधिपरस्नेहभरितः
यतिक्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह ।
अहंकारध्वान्तं विजहति कथंकारमनघाः
कुतर्कव्याळौघं कुमतिमतपाताळकुहरम् ॥ 56

845 यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशाम्यन्तां यद्वा निजमततिरस्कारविगमात्
निरातङ्काष्टङ्कद्रमिडकुहदेवप्रभृतयः ॥ 57

846 सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे
निषिञ्चन्ति न्यञ्चन्निगमगरिमाणः फणितयः ।
यदास्वादाभ्यासप्रचयमहिमोल्लासितधियां
सदाऽऽस्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ 58

847 यतिक्षोणीभर्तुर्यदिदमनिदंभोगजनता-
शिरःश्रेणीजुष्टं तदिह दृढबन्धं प्रभवति ।
अविद्यारण्यानीकुहरविहरन्मामकमनः-
प्रमाद्यन्मातङ्गप्रथमनिगळं पादयुगळम् ॥ 59

848 सवित्री मुक्तानां सकलजगदेनःप्रशमनी
गरीयोभिस्तीर्थैरुपचितरसा यामुनमुखैः ।
निरुच्छेदा निम्नेतरमपि समाप्लावयति मां
यदृच्छाविक्षेपाद्यतिपतिदयादिव्यतटिनी ॥ 60

849 चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः
सिद्धान्ता न समिन्धते यतिपतिग्रन्थानुसंधायिनि ।
मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः
किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥ 61

850 वन्दे तं यमिनां धुरंधरमहं मानान्धकारद्रुहा
पन्थानं परिपन्थिनां निजदृशा रुन्धानमिन्धानया ।
दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः
काले नः करिशैलकृष्णजलदः काङ्क्षाधिकं वर्षति ॥ 62

851 काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता
सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी ।
यत्प्रख्यापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणान्
आ सिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥ 63

852 लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटा-
रक्षारोपणधन्यसूरिपरिषत्सीमन्तसीमान्तिकम् ।
भिक्षापर्यटनक्षणेषु बिभरांचक्रे गळत्किल्बिषा
यद्विन्यासमिषेण पत्रमकरीमुद्रां समुद्राम्बरा ॥ 64

853 नानातन्त्रविलोमितेन मनसा निर्णीतदुर्नीतिभिः
कष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकैः ।
व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः
क्लृप्तः केळिशुकः शुकः स च मुधाबाधाय बोधायनः ॥ 65



854 अर्थ्या तिष्ठति मामिका मतिरसावाजन्मराजन्वती
पत्या संयमिनामनेन जगतामत्याहितच्छेदिना ।
यत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां
प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ 66

855 शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशता
प्रत्यादिष्टबहिर्गतिः श्रुतिशिरःप्रासादमासीदति ।
दुग्धोदन्वदपत्यसंनिधिसदासामोददामोदर-
श्लक्ष्णालोकनदौर्ललित्यललितोन्मेषा मनीषा मम ॥ 67

856 आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा मतिः
तत्राव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् ।
को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटा-
शस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥ 68

857 पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे
मीमांसामांसलात्मा समजनिषि मुहुः सांख्ययोगौ समाख्यम् ।
इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थैः
अन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ 69

858 गाथा ताथागतानां गळति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ 70

859 विष्वग्व्यापिन्यगाधे यतिनृपतियशःसंपदेकार्णवेऽस्मिन्
श्रद्धाशुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः ।
प्रज्ञादौर्जन्यगर्जत्प्रतिकथकवचस्तूलवातूलवृत्त्या
सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ 71

860 आशामतङ्गजगणानविषह्यवेगान्
पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहवकुतूहलिभिः परेषां
कर्णे स एष कवितार्किकसिंहनादः ॥ 72

861 उपशमितकुदृष्टिविप्लवानाम् उपनिषदामुपचारदीपिकेयम् ।
कबलितभगवद्विभूतियुग्मां दिशतु मतिं यतिराजसप्ततिर्नः ॥ 73

862 करतलामलकीकृतसत्पथाः श्रुतिवतंसितसूनृतसूक्तयः ।
दिवसतारकयन्ति समत्सरान् यतिपुरन्दरसप्ततिसादराः ॥ 74

श्रीयतिराजसप्ततिः समाप्ता

---

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
श्रीमते निगमान्तमहादेशिकाय नमः

---

श्रीः
श्रीमते निगमान्तमहादेशिकाय नमः

## ஸ்ரீதேசிகன் அருளிய மங்களாசாஸந ச்லோகங்கள்

*கோயில் (திருவரங்கம்)*

विधिविहितसपर्यां वीतदोषानुषङ्गाम्
उपचितधनधान्यामुत्सवैः स्यानहर्षाम् ।
स्वयमुपचिनु नित्यं रङ्गधामन् स्वरक्षां
शमितविमतपक्षां शाश्वतीं रङ्गलक्ष्मीम् ॥ 1

*திருமலை (திருப்பதி)*

प्रशमितकलिदोषां प्राज्यभोगानुबन्धां
समुदितगुणजातां सम्यगाचारयुक्ताम् ।
श्रितजनबहुमान्यां श्रेयसीं वेङ्कटाद्रौ
श्रियमुपचिनु नित्यं श्रीनिवास त्वमेव ॥ 2

*பெருமாள்கோயில் (காஞ்சீபுரம்)*

वरद विरचय त्वं वारिताशेषदोषां
पुनरुपचितपुण्यां भूषितां पुण्यकोट्या ।
सितमुदितमनोभिस्तावकैर्नित्यसेव्यां
हतरिपुजनयोगां हस्तिधाम्नः समृद्धिम् ॥ 3

*யாதவாத்ரி (திருநாராயணபுரம்)*

नवनवबहुभोगां नाथ नारायण त्वं
विरचय दुरितौघैस्तामनाघ्रातगन्धाम् ।
सहजसुलभदास्यैः सद्भिरभ्यर्थनीयां
यतिपरिबृढहृद्यां यादवाद्रेः समृद्धिम् ॥ 4

*ஒன்றுசேர மங்களாசாஸநம்*

श्रीरङ्गद्विरदवृषाद्रिपूर्वकेषु
स्थानेषु स्थिरविभवा भवत्सपर्या ।
आकल्पं वरद विधूतवैरिपक्षा
भूयस्या भवदनुकम्पयैव भूयात् ॥ 5

श्रीमते निगमान्तमहादेशिकाय नमः

ஸ்ரீ:

ஸ்ரீமதே நிகமாந்தமஹாதேசிகாய நம:

## ஸ்தோத்ரங்களில் அமைந்த வ்ருத்தங்களின் விளக்கம்

ஸ்ரீ தேசிகன் அருளிய இருபத்தெட்டு ஸ்தோத்ரங்களிலும் அமைந்த பற்பல வ்ருத்தங்களின் பெயர்களும் அந்த அந்த வ்ருத்தங்களைக் கொண்ட சுலோகங்களின் மொத்த எண்களும் பின்பு அந்த அந்த வ்ருத்தத்தில் அமைந்த ஒவ்வொரு சுலோகத்தின் எண்ணும் கீழே தரப்படுகின்றன:—

| | | | | | |
|---|---|---|---|---|---|
| (1) | அநுஷ்டுப் | 64 | (13) | மாலிநீ | 34 |
| (2) | ஆர்யா | 116 | (14) | ரதோத்ததா | 1 |
| (3) | உபஜாதி | 37 | (15) | வஸந்ததிலகா | 266 |
| (4) | ஔபச்சந்தஸிகம் | 35 | (16) | வைதாளீயம் | 2 |
| (5) | தண்டகம் | 1 | (17) | வம்சஸ்த்தம் | 2 |
| (6) | த்ருதவிளம்பிதம் | 1 | (18) | சார்த்தூல விக்ரீடிதம் | 35 |
| (7) | த்ருதி | 8 | | | |
| (8) | நத்குடகம் | 14 | (19) | சாலிநீ | 1 |
| (9) | புஷ்பிதாக்ரா | 2 | (20) | சிகரிணீ | 28 |
| (10) | ப்ருத்த்வீ | 50 | (21) | ஸ்ரக்தரா | 82 |
| (11) | மஞ்ஜுபாஷிணீ | 5 | (22) | ஹரிணீ | 17 |
| (12) | மந்தாக்ராந்தா | 61 | | | |

மொத்தம்—862

---

(1) अनुष्टुप्—அநுஷ்டுப் (64 சுலோகங்கள்)
1, 88 to 97, 252, 312, 313, 321, 330, 331, 332, 333, 341, 505, 641 to 650, 673, 674, 714 to 733, 736, 789 to 798.

(2) आर्या—ஆர்யா (116 சுலோகங்கள்)
33, 98 to 107, 314, 334, 335, 404 to 504, 735



(3) उपजाति:—உபஜாதி (37 சுலோகங்கள்)
5 to 31, 244, 315, 322 to 329.

(4) औपच्छन्दसिकं—ஔபச்சந்தஸிகம் (35 சுலோகங்கள்)
108 to 117, 316, 339, 342 to 350, 510 to 517, 713, 799 to 803.

(5) दण्डक:—தண்டகம் (சுலோகம் 1)
734.

(6) द्रुतविलम्बितं—த்ருதவிளம்பிதம் (1 சுலோகம்)
862.

(7) धृतिच्छन्द:—த்ருதிச்சந்தஸ் (8 சுலோகங்கள்)
705 to 712.

(8) नर्कुटकं—நத்குடகம் (14 சுலோகங்கள்)
138 to 147, 680, 701, 822, 823.
(இதை நர்க்குடகம், நர்த்தடகம் என்றும் வழங்குவதுண்டு)

(9) पुष्पिताग्रा—புஷ்பிதாக்ரா (2 சுலோகம்)
241, 861.

(10) पृथ्वी—ப்ருத்த்வீ (50 சுலோகங்கள்)
59 to 87, 168 to 177, 248, 251, 337, 338, 824 to 830.

(11) मञ्जुभाषिणी—மஞ்ஜுபாஷிணீ (5 சுலோகங்கள்)
805 to 809.

(12) मन्दाक्रान्ता—மந்தாக்ராந்தா (61 சுலோகங்கள்)
32, 47 to 58, 128 to 137, 240, 245, 320, 509, 521 to 524, 554 to 577, 611, 683, 693, 696, 820, 821.

(13) मालिनी—மாலிநீ (34 சுலோகங்கள்)
118 to 127, 192, 193, 196, 242, 243, 246, 318, 319, 351, 402, 403, 520, 552, 553, 578, 639, 640, 690, 695, 697, 816 to 819.

(14) रथोद्धता—ரதோத்ததா (1 சுலோகம்)
525.

(15) वसन्ततिलका—வஸந்ததிலகா (266 சுலோகங்கள்)
178 to 191, 197 to 239, 253 to 311, 317, 340, 352 to 401, 506, 507, 508, 526 to 551, 579 to 609, 612 to 638, 678, 686, 692, 694, 810 to 815, 860.

(16) वैतालीयं—வைதாளீயம் (2 சுலோகங்கள்)
518, 519.

(17) वंशस्थं—வம்சஸ்த்தம் (2 சுலோகங்கள்)
250, 804.

(18) शार्दूलविक्रीडितं—சார்த்தூலவிக்ரீடிதம் (35 சுலோகங்கள்)
34 to 46, 194, 195, 247, 336, 610, 679, 681, 682, 688, 691, 698, 699, 700, 702, 849 to 856.

(19) शालिनी—சாலினீ (1 சுலோகம்)
4.

(20) शिखरिणी—சிகரிணீ (28 சுலோகங்கள்)
2, 3, 148 to 157, 675, 676, 677, 704, 837 to 848

(21) स्रग्धरा—ஸ்ரக்தரா (82 சுலோகங்கள்)
651 to 672, 684, 685, 687, 689, 703, 737 to 788, 857, 858, 859.

(22) हरिणी—ஹரிணீ (17 சுலோகங்கள்)
158 to 167, 249, 831 to 836.

மொத்தம் சுலோக எண் 862.

---

ஸ்ரீமதே நிகமாந்த மஹாதேசிகாய நம:



श्री:
श्रीमते निगमान्तमहादेशिकाय नम:

## श्लोकसूची-சுலோகங்களின் அகராதி

श्रीमते निगमान्तमहादेशिकाय नमः



ஶ்ரீ

ஶ்ரீமதே நிகமாநதமஹாதேசிகாய நம:

## பாட பேதங்கள்

[இதுவரை வெளிவந்துள்ள பெரும்பான்மையான பதிப்புக்களில் உள்ள பாடபேதங்கள் கீழே கொடுக்கப்படுகின்றன. இவற்றில் பொருட் பொருத்தமுள்ள சில பாடங்கள் இருப்பதுடன் இலக்கணப் பிழை—பொருள் பொருந்தாமை—விருத்தத்திற்குச் சேராமை முதலிய குற்றங்கள் நிறைந்த பாடங்களும் உள்ளன.

முதலில் சுலோகத்தின் தொடரெண்ணும், பின்பு சுலோகத்தின் வரி எண்ணும் தரப்பட்டுள்ளன.]

| | | | | | |
|---|---|---|---|---|---|
| 2 | 2 | अपताप | 36 | 3 | संस्तृतो, विसंस्थुळो |
| 3 | 3 | दृप्यत्कौतस्कुतकलह | | 4 | विजयते |
| | | कलिकथक | 40 | 2 | य इह |
| 9 | 1 | तत्त्वे | 41 | 2 | विहारहार |
| 10 | 2 | प्रधानैः | 42 | 1 | पत्तन |
| 11 | 2 | त्वामक्षरा | | 4 | जगतः |
| | | मातृकां ताम्, मातृकां ते | 44 | 3 | क्षितिकण्ट |
| 12 | 2 | परमां | 45 | 3 | कल्किवाह, कल्पिन्निति |
| 14 | 2 | पुरोवाद, पुरोभाक | | 4 | पुनन्तु |
| 16 | 1 | भवद्योग | 48 | 1 | श्रुतपरि |
| 18 | 1 | स्वैरानुभाव, त्वदनन्य | | 4 | प्रतिफलतु |
| | | संरुद्धवीर्यां, संरब्ध- | 49 | 1 | नुपूर्व्यां |
| | | वीर्यां, संरुद्धवीर्याः | | 2 | दौत्य, कलाचिम् |
| 19 | 1 | विपाकात् | 50 | 2 | लीलोपधानं |
| 24 | 2 | लालसानां | 52 | 4 | शमयतु |
| 26 | 1 | प्रकाशैः | 53 | 3 | रज्जुभि |
| 30 | 2 | मिदं दयायाः | | 4 | न्यनुभवतु |
| 33 | 1 | हेतुं | 54 | 4 | विलगति मम, विलगतु मम |
| 35 | 3 | रिङ्खण | 58 | 4 | दिशति |

| | | | | | |
|---|---|---|---|---|---|
| 67 | 4 | क इह | 93 | 2 | प्रेयसीं |
| 69 | 2 | पृथ्वीपते | 99 | 1 | नादुष्टम, नाविष्टम् |
| | 4 | परमात्म, रात्मेति मे | | 2 | संजीवयति |
| 70 | 4 | धृतिं विभो | 100 | 1 | भवत्यां |
| 71 | 3 | दिवि पदस्य | 101 | 2 | तारणीं |
| | | ते दीव्यतः, देदीप्यतः | 108 | 2 | शालिनीयं |
| 72 | 3 | प्रथितसा | 110 | 2 | प्रसक्तिलास्यम् |
| | 4 | मनुकम्पतां, मनुकम् | 111 | 2 | यत्रसापचायि |
| 73 | 4 | तथा वितथ | 116 | 1 | दुष्यतां |
| 74 | 4 | सपदि रङ्ग | 117 | 1 | राधिचक्र |
| 75 | 1 | तो निर्जितः | 119 | 3 | चतुरैः खैः, चतुरैस्तैः |
| | 2 | वृजिनार्णवात् | 122 | 4 | चरण |
| 76 | 4 | तज्जीहपः | 123 | 2 | स्थितमनु |
| 77 | 2 | व्रजजना | 125 | 2 | स्थिरचर |
| | 4 | रङ्गधुर्य | 129 | 3 | विभोस्तत्परि |
| 79 | 2 | तोयं भरः | 133 | 2 | त्वन्नियोगात् |
| | 4 | प्रचित | 134 | 4 | शमयितुं |
| 81 | 3 | स्ववर्ति | 142 | 2 | मुद्रज, मुद्रह |
| 82 | 1 | महितरङ्ग | 146 | 2 | स्थिरतर, स्थिरचर |
| | 2 | मुदीयमानं | 148 | 2 | शमयितु |
| | 4 | करुणोदधे | | 3 | प्रथित |
| 83 | 2 | द्वारगाः | | 4 | प्रवहसि |
| | 4 | जाग्रति | 150 | 2 | दये सर्वं |
| 84 | 4 | धामादिके | | | गणयति न |
| 86 | 2 | पदमिह | 151 | 4 | जगतिषु, दण्डनविधिम् |
| 89 | 2 | दयाम्भोधेः | 153 | 3 | शृङ्गार |
| 92 | 2 | करुणाम्भोधेः | 154 | 4 | विवृण्वन्त, विसिन्वन्त |



| | | | | | |
|---|---|---|---|---|---|
| 155 | 2 | विमुक्तयैक | 213 | 4 | संतमसमल |
| 156 | 4 | विकल्पन्ते | 215 | 2 | मरतकं |
| | 4 | निर्झरगुणाः | | 4 | सौदामिनीव |
| 159 | 3 | विरोधिनी | 216 | 2 | परस्तात् |
| 162 | 2 | पच्छिद्यैषा | 218 | 4 | मेव निभृतं, मेव निखिलं |
| 164 | 4 | मुपादत्से, मुपादित्से | 220 | 1 | संक्षयार्थं |
| 165 | 2 | पितृसुर | 221 | 4 | वदन्ति सन्तः |
| | 4 | प्रतिभुवमिव | 222 | 2 | संभाविता |
| 167 | 1 | त्वत्संपृक्तौ | 223 | 4 | गूढनिरपाय |
| | 3 | विभूतिवला | 224 | 3 | संतरणो |
| 168 | 1 | विधृतलोकया | | 4 | यापि वासः |
| 170 | 3 | वेदिनीं | 227 | 2 | विषयभोग |
| | 4 | त्वदभिज्ञु | | 3 | जृम्भमाणः |
| 171 | 2 | परिस्फुर | 228 | 4 | यदि दया तव |
| 174 | 2 | चरं क्षितौ | 229 | 2 | अन्यन्न किंचि |
| 177 | 3 | निर्मूलनं | | 4 | लेशगमने |
| 178 | 3 | पतौ दये | 236 | 4 | सुधाप्रवाहः |
| 180 | 1 | विज्ञाति, वज्ञात | 237 | 1 | मुक्तस्त्वहं |
| 182 | 1 | विपुलायिते | 238 | 1 | तवास्ति |
| 193 | 2 | लोकयन्तः | 240 | 3 | सततं संसदं |
| 194 | 2 | सध्रीचीमिव, मिह | | 4 | र्विलयनिभृ |
| 195 | 3 | निष्प्रत्यूष, नोच्चलद्दी | 241 | 2 | मरतक |
| 197 | 4 | क्षन्तव्य एव | 242 | 2 | कण्ठभागे |
| 200 | 3 | त्वयैव | 245 | 2 | मरतक |
| 206 | 2 | यदिदं | 246 | 4 | फलमनल्पं |
| 209 | 1 | त्राता दिवः, त्राता पतिः | 247 | 1 | वर्गानल |
| 212 | 4 | तव वेत्ति | 249 | 2 | भवपटुतर, पटुतरभट |

| | | |
|---|---|---|
| 250 | 3 | तदञ्जनाभं |
| 255 | 3 | प्रियतमं |
| | 4 | मभिवाञ्छति |
| 256 | 4 | मरतक |
| 257 | 3 | पि तनुते |
| 261 | 4 | ऽभिगम्यम् |
| 263 | 2 | मात्मसु |
| | 3 | लिकांशुक |
| 266 | 2 | मुपदेशं |
| 267 | 1 | पारदर्शीं, चोरदर्शीं |
| | 2 | सहितान् |
| | 3 | मुखानिवान्यान् |
| | 4 | सहत्वम् |
| 268 | 3 | यत्किञ्चि |
| 269 | 3 | विनाशनार्हैः |
| 271 | 2 | संवनना |
| | 3 | स्वोक्त्याऽम्बरी |
| | 4 | त्वन्निम्नमी |
| 272 | 2 | त्वदनुभूतिषु |
| | 4 | संस्कृतिरीक्षणं शिक्षितधीः |
| 273 | 3 | प्रत्याहते |
| 274 | 4 | यान्ति शान्तिम् |
| 275 | 1 | महाम्बुराशि |
| | 3 | भजन्ति भूयः |
| 277 | 2 | फलं समभि |
| | 4 | विचक्षणं त्वाम् |
| 278 | 1 | निरवेक्ष |

| | | |
|---|---|---|
| 278 | 3 | सुलभं |
| 280 | 1 | अब्भान्तरेषु |
| | 2 | श्रद्धाधिकान् |
| | 3 | कृती त्वं |
| 281 | 1 | घ्यनुगम्य |
| 282 | 4 | मङ्गळ्य |
| 283 | 1 | पदे दयित |
| 283 | 2 | दातुं त्वयैव, प्राप्तुं त्वयैव |
| 285 | 1 | नियमस्थिर |
| 286 | 1 | त्वयि भजन्ति |
| 287 | 2 | मनुपेक्ष्य |
| 288 | 1 | र्नियताः |
| 291 | 3 | तिर्वरुणः |
| 292 | 1 | भैः सहिते, ते गु |
| 293 | 4 | प्राचो निरी, प्रायो निरी |
| | | इति त्वयाऽहम् |
| 294 | 3 | दूष्येत् |
| 295 | 1 | विविधान्यनु विविधान्यपि |
| 296 | 2 | कृत्यमिव |
| | 3 | मनन्तमित्थं |
| | 4 | वहतु ते |
| 297 | 3 | स्तदसि |
| | 4 | त्वमात्म |
| 298 | 2 | भरा ते |
| 299 | 1 | कथं कथमित्य |
| | 2 | मांसलतया |
| | 3 | जन्तुरीत्या |



| | | |
|---|---|---|
| 301 | 1 | साक्षिकं मे |
| | 2 | त्वदपेक्षि |
| | 4 | पूर्णो |
| 302 | 1 | तवाहं |
| | 3 | पात्रं कुरु |
| 303 | 4 | विचारय |
| 304 | 4 | विख्यातधीर |
| 305 | 2 | मखिललोक |
| 306 | 4 | भूस्तदन्य |
| 307 | 1 | मुख्यं च तत् |
| 308 | 3 | परिपूर्णितं |
| | 4 | निर्व्यपेक्षम्, निर्विपक्षम्, |
| | | निर्विवक्षन् |
| 310 | 2 | प्यपि संवि |
| 311 | 1 | विषयः स्वद |
| 313 | 2 | स्वतस्रोतो |
| 316 | 1 | समये तत्परिपन्थिनो |
| | 2 | भगवद्भक्तिमतां |
| 317 | 3 | रिह तस्य |
| 319 | 2 | संमतः |
| 320 | 1 | चेतसो दिष्ट |
| | 3 | भोगशय्यां |
| | 4 | विश्वभोगैक |
| 323 | 3 | भुजापदेश, भुजाखिलेश |
| | 4 | दानीं प्रति |
| 329 | 1 | मिलाषां, प्रहाणां |
| 331 | 2 | वेङ्कटेशस्य |

| | | |
|---|---|---|
| 336 | 3 | प्रणिपेदुषः, प्रणिपेतुषः |
| 338 | 4 | विषज्यते |
| 347 | 1 | अपनीय |
| 349 | 3 | स्वयं मां |
| | 4 | परिष्कृषीष्ठाः |
| | | परिष्कुरु त्वम् |
| 351 | 4 | पुरवासी |
| 353 | 3 | प्रदर्शित |
| | 4 | मामि नित्यं |
| 354 | 2 | विज्ञाप्यसे |
| 355 | 2 | तृषिताः कल |
| | 4 | गणाश्चिरमादधानाः |
| | | गणाः कणमालिहानाः |
| | | गणाश्चिरमाददानाः |
| | | गणाः कणमाददानाः |
| 356 | 3 | सिद्धिदायि |
| | 4 | दानेषु सत्य |
| 358 | 3 | आकृष्टवानिह |
| | | आकृष्टवानिति |
| | | आकृष्टवान् ननु |
| 359 | 3 | पूर्णसुभगं, पुण्यमधुरं |
| 362 | 1 | विभवं निगमोत्तमाङ्गे |
| 364 | 3 | पूर्णसुषमा |
| 366 | 3 | सहस्रतुल्यः |
| 367 | 4 | चटुलकुन्तळ |
| 368 | 2 | कुन्तळदर्श |
| 369 | 4 | पुराणपुरु |

371 4 आशां प्रसा
377 1 आरण्य
3 निषेवितं तं
384 1 मनोमथ
3 समिद्ध
387 1 सुजात
2 मास्ये
3 विन्यस्तवाम
388 3 करीन्द्रकरा
389 2 लब्धसल्यम्
390 1 दौत्ये
393 3 गुणैरुपा
396 2 रनन्यभोग्या, रतीव योग्या
397 1 विबुधेन
398 3 मां स्वकीयं
401 2 मानमनघं
3 तप्त इति, कर्मघर्मे
404 1 ज्योति, ज्योतिषं
405 2 व्याहृति
407 1 तत्र विन
410 2 श्रद्दितः, श्रद्धाहित
411 1 संक्षपित
412 2 न हार्यसे
413 1 अनुप्रमि, प्रयुक्ता
414 2 सदादर्शित
417 2 परं युवाभ्याम्
419 1 प्रकटित

420 1 नियमविधी
421 2 करोति
422 2 निर्वृतनित्य, निषण्णनित्य
424 2 कस्माद्वह, सहन्
425 2 त्वत्तो नत
426 2 शक्तया: को, त्वमेवं
427 2 आत्मनः, आत्मकृपा,
प्रवृत्तः
428 2 दिवसकरा
429 2 तीर्यन्ते न
430 2 श्यामळमहः
431 2 सविहगः, उच्चल,
सविधगतः
432 2 शुभं तव, हितं तव
433 1 त्रिगुणा, गणनीयाः
2 खलु समर्थाः, भूषणार्थ
434 1 निर्यान्ति, निर्यन्ति
त्वदच्युत
436 2 इव लुटित
439 2 मालं वक्षो
440 1 नित्यतापो, निर्यत्तापो
2 शीतळशान्त
441 1 चन्द्रक्षुब्ध
442 1 नाभीरुहं शोभते सुखदम्
443 2 राजतेऽच्युत
444 1 वीरयोर्दीर्घ
445 1 मरतक



447 1 आसादयन्त्य
448 1 श्यामं तव चनेषु निदधतः
चनयोः निदधतः
2 प्रेक्षन्ते त्वाम्
449 2 नतसत्य
450 1 स्वपन्तो विका
451 1 श्रियां वन
453 1 प्रलोकितस्वपर
456 2 दिनकर
457 1 निस्त्रुटित, निखण्डित
459 1 कर्ममय
2 अर्चयन्ति
461 2 कण्टकित
463 1 दुर्ग्रहम्
2 विलग्नन्तः, डोलायित
दोलायमान
464 1 त्सुकरुच्या
466 2 यान्ति तु भक्ताः
467 1 प्रकटतिमिरं
2 कृतकृत्याः
470 1 नवपदम्
473 2 अच्युत रक्षति
477 2 विदीर्यमाणः
479 2 पात्रं भत्रामः
481 1 त्रुटितपतमाना
पटायमाना, खण्डित
483 1 यदृच्छया ज्ञा, तिलाप्रज्ञा

484 2 यद्धितं मम
487 1 विश्रमितं
1 मार्गनिर्यातम्
2 सिंहमिव
490 2 लक्ष्मीपुळकितम्
491 1 पदपद्मे
492 1 उपनिषदां शिरः
493 2 भावयिष्यसि, भावयसि
494 1 सारमिव स्वयम्
495 2 प्रार्थयामि, पदपद्मः
496 1 निमज्ज्यमानम्
निस्तुत्यमानम्
497 1 घर्मतापितम्
1 कारिततृष्णाकम्
कामिरप्य, कदाऽप्य
2 कारय
498 1 मुञ्चन्, मुञ्च नः
नयस्व नय
500 1 निक्षिप, क्षिपस्व
502 2 प्रियान् भृतं, स्वात्मभरम्
504 2 शुभदम, सुखदम
505 1 वृन्दावन
506 3 त्रिकेण रुचि
507 1 गन्धरुचिर
510 1 वेदनीयं
522 3 लळितं मे
524 3 भ्यर्थ्यमानः

527 2 तुष्टूषतो
3 वाचालयस्यथ
529 3 पिन्नातट
4 भुवनोऽसि, सुभगोऽसि
530 2 सश्रित, जनेषु च
4 मानमनयोः, संप्रयोगात्
531 1 हृदि दीप्तरुचौ, रुचा
3 दभ्रावकाश
4 योगकलनाः
533 2 विक्रान्त
3 कर्णपाश
534 1 पदेषु धत्ते
3 भक्तैः सह
536 1 श्रमत्वं
4 विदुस्ते, विदुस्तम्
537 2 वहतां शिरसा
3 ते द्वयं तत्
538 1 मर्दसह
2 निगळिता
541 1 छन्दकै तव
542 1 विविधापराधान्
3 तारेण
4 किमपि
543 1 कामावलोपि
3 त्वत्संतते
भजन्तः, भजन् नः
4 कृतार्थय स्वम्

546 3 भक्तोपमर्द
547 1 एनस्ततीमति
4 तरुणामव
548 2 निम्नेपि मो
3 पादनिघ्नं
549 4 तदुपानयेथाः
तदुपादधीथाः
550 2 व्यक्तं त्वये
त्वयैवम, त्वयैतद
551 4 विनैव
552 2 सुविदित, विदितनिजसु
553 1 स्वभावा
3 भुवि मरु, लोलपर्या
561 4 पवने
562 4 दैवतं दम्पती
564 1 मरतके
4 विभ्रम
567 4 स्थितिसमुदयां
570 4 श्लाघाघोष
571 3 सीमन्त
573 2 पादयुग्मम्
574 4 राद्रियेथाः
575 1 तमीभास्वत
3 त्वामहमतिभयः
दारशीलान्, दारशील
578 2 कल्प्यमानं
4 सीमासार्वे



579 2 मायावराह
580 1 त्वं व्याहृतिः, प्रियस्ते
4 वथावदजले, हंति त्वम्
583 3 त्वमाश्रित
584 1 ति वसुधे
3 यान्यभिमुखा
585 2 शीतळतटः
588 4 शेषात्मनाऽपि
589 3 भुवनान्यळका
590 3 माद्यमेव
596 1 वलनलम्भित 3 गुणौघैः
597 1 पत्युस्तमाल
599 3 मालिनि त्वां
600 1 निष्कणाकेन विभवेन
विशेषणीयां
2 विपन्निदाघां
3 सर्गापवर्ग 4 धूतपङ्काः
वधूं नवपङ्कजाक्षाः
602 3 रससंश्रितेन, रससंस्तुतेन
परिशीलनसंस्कृतेन
603 1 संचोदितान्
604 2 भयवरां सभूमिं, स्वतन्त्रे
4 धिकारान्
605 1 तादमुष्मात्
2 नाऽप्रधृष्यम्
606 1 निवहैरपि
3 गाडापराध 4 क्षमा त्वम्

607 1 संधिसुलभेऽपि, विमुखेऽपि
610 1 पादपङ्कज, विन्यस्य....जं
3 पुळका
611 4 यद्यत्कामः, यद्यत्कामं
614 4 संविधेयाः
616 4 नादसुभगैः
617 2 विभवेऽपि
625 2 त्यक्ता भुजा
627 2 निपीतरसाः, प्रमोदान्
4 किमपि
628 3 आमोदितोऽपि
4 मौळिमालाः
631 2 माल्यरस, दामरस
संवरणेन
632 1 यानुरोधात् 3 त्रिलोकी
633 1 देवि कान्त्या
3 रचनया च, तथेन्दिरायाः
634 1 प्रसूतैः 4 मान्यं मनु
635 4 तस्य न स्यात्
तस्य नासीत्
636 2 एष तव
3 कर्मानुबद्ध, कर्मानुबन्ध,
कर्मानुरूप
4 दुर्विषह
637 4 यन्ति चिरेण
638 1 मां सहसैव
643 1 स्वामिन् 4 न्यस्यसि

650 1 श्रीमान्
2 अचीकरः
652 2 दिव्यदिष्टि, प्रदानात्
653 3 ऽनसूयः
655 2 स्तादृशः
657 2 महत्त्वप्रसा
3 घोरापवादैः
658 1 विमतिरिह, विहतिमति
663 2 तन्मेळनं
4 यद्वा नैका, द्रवति च
664 1 रूपं न्यस
666 4 प्रथयतु
668 4 सक्कृदिति
669 3 च युक्तया
672 1 शुभकृदे 3 प्राप्य संर
677 2 निजावेश
684 1 गतयः शक्ति
2 क्षपणपरि 4 रक्षाः प्रति
685 1 त्वत्कोपाय, पायानपायां
3 त्वन्निदेशात्
686 1 मधनः, मधनाः, मथनाः
687 2 वेद्यस्त्व 3 ष्ठिवत् तत्
689 1 भूम्ना न्यसन
690 1 वासिन्
691 1 प्रतिबन्ध
694 1 उक्त्वा धनं
696 1 नियता

698 3 वाचां, वाचा
4 कवेः स्वेना
699 1 ऽनुसृत्य 2 र्याश्रयम्
700 3 देव कुशलिन्
देव कुशलं, देहि कुशलं
701 2 निरवधिक
702 1 नान्योचितां
2 मयीं व्यपोह्य
3 विसीमभूम
703 1 लब्धसत्त्वं 3 भोगादि
4 स्वभावं, मतुचिरं
705 1 (2) परगुण
706 1 (2) सुरजन
707 2 (2) परिमित
708 1 (2) निरुपथ
709 2 (2) जगदवि
710 2 (1) विविधमाया
2 (2) विकटमाला
3 (1) पृथुमहा (2) दृढतया
711 1 (1) महितसंवित्
क्षितिक्षर
712 1 (1) नेतस्त्र 2 (2) हिरण्मय
716 1 द्रुमाः पर, लाञ्छिताः
718 2 अस्माकं दण्ड
719 1 अनन्यत्वाय
722 1 विष्णोर्या 2 अचिन्त्यश
724 1 यत् सा, साधकम्



725 1 विमुच्यते, विविच्यते
726 1 धनदेवस्य
2 व्यज्यतेऽनेन
727 2 वज्रोऽयम्
2 दधीच्यस्थिसमुद्भवः
728 2 भयप्रश
729 1 यान्त्यति, मुसल्या
730 2 अस्माकं तेन, विशूलिता
731 2 आयुधः
எல்லாச் சுலோகங்களிலும்
वः என்ற இடத்தில் नः
என்ற பாடமும் உண்டு.
734 (1) 1 त्कण्ठितारूढ
(2) 3 चमत्कारि
735 1 गुम्भगुणः
2 दण्डकेऽसौ
737 2 न्यस्य शुद्धा
3 पक्षद्वितय
738 1 रपि व्यक्ति
739 3 तादृशाम्नाय
4 प्रसूतात्
740 4 स्वाभाव्यं
741 3 लक्षैः
743 4 संनिधिं
744 3 नाथः, सहभव
745 1 महाशक्र
747 1 त्रुटितचंतु, रम्यद्रुरुन्ति

750 2 वेलायाः के
751 1 समुत्थोय
752 1 आसृकाक्तै, आसृकाप्तै-
3 ब्रह्मगा [र्दुरुपरम
4 कारणा नः, कारणं नः
753 1 स्वच्छन्दः
2 स्वान्तर्ध्वान्तं
4 वेलाहल
754 3 दंष्ट्रानिवेशौ
755 2 द्वेष सिन्धुः
756 1 तैरावण 4 न्नेत्रश्रियं
757 1 त्रिहितातङ्क
759 3 सर्गगोळः
760 2 पत्रलेशं 4 संनिधत्तां
761 3 प्रातिदक्षः
763 1 ग्रहणभय
2 जिघत्सेदिति
764 2 मनसा, प्रेक्ष्य
765 2 दत्तात्रगाहः
3 दृष्टीः, दूतीः
4 अङ्गैरङ्गं नि, अङ्गेनाङ्गैर्नि
766 2 प्रकारम्
767 1 निकरं
769 1 समघटित, र्व्यतिपजति
2 प्रविष्टः
770 2 प्राणरक्षैः
3 किमपि, विषहरं

| | | |
|---|---|---|
| 771 | 1 | शीधुगन्धं |
| 773 | 1 | दीप्तरत्न 3 नीराजनार्थैः |
| 775 | 1 | ऽनेकधा |
| 776 | 3 | विवक्षुः |
| 777 | 2 | शुक्तयन्तराभे |
| 779 | 2 | वाळाभिलाषः |
| 780 | 1 | दुःखात् [वाळाभिषेकः |
| 781 | 2 | फणिमणि |
| 782 | 4 | रातिपक्षः |
| 783 | 2 | इति हि धिया 3 क्षतभय |
| 784 | 1 | सुवेलः |
| 785 | 1 | प्रसूतः |
| | 2 | समघटितदृढो |
| | | समघटत दृढो |
| | 3 | निर्घातवातः |
| 786 | 1 | भिन्द्यात् 3 कर्मपाशैः |
| 792 | 1 | सारस्वत |
| 793 | 1 | मुनिनाथेन |
| 795 | 2 | मदिरागन्धं |
| 796 | 2 | कृतादरम् |
| 804 | 2 | मुक्तामय |
| 805 | 3 | शयोदयं |
| 808 | 2 | चरणौ |
| 813 | 1 | निरूढ |
| 817 | 3 | दमितदुरि, शमितविमत, विमतखेदा |
| 818 | 1 | पानीयसिद्धिः |
| | 4 | नाडिन्धमानाम् |
| 820 | 2 | व्यूहभेदैः |
| 822 | 4 | शीफरिताम् |
| 823 | 2 | केळिनिरतै |
| 828 | 3 | कोपासन 4 प्रमितभार |
| 830 | 4 | द्रुतप्रसृति |
| 832 | 4 | कर्पूरोद्धं |
| 835 | 2 | प्रमति |
| 838 | 1 | भणिति |
| 840 | 4 | प्रदिशतु |
| 841 | 2 | यतिनृपतिभू |
| 842 | 2 | संदोहात्मा, श्रुतिगिराम् |
| | 4 | प्रणयिनः |
| 845 | 3 | निजमति |
| 847 | 2 | मनसि दृढ, प्रभवतु |
| 848 | 3 | दुरुच्छेदा |
| 849 | 2 | यतिवर |
| 853 | 4 | मुधाबोधाय |
| 855 | 1 | वाणीशै |
| 862 | 1 | सत्कथाः |

---

श्रीमते निगमान्तमहादेशिकाय नमः

ஸ்ரீ:

ஒப்பிலியப்பன் ஸந்நிதி ஸ்ரீ உ.வே. வங்கீபுரம் நவநீதம்

## ஸ்ரீராமதேசிகாசார்ய ஸ்வாமியால்

இயற்றப்பட்ட மற்ற புத்தகங்கள்

## 1. ஸ்ரீ தேசிக ஸ்தோத்ரமாலா

(மூலம் ஸம்ஸ்க்ருதம் - தமிழ்)

தமிழ் உரையுடன்

விலை ரூ. 60

## 2. ஸ்ரீ தேசிகப் பிரபந்தம்

உரையுடன்

விலை ரூ. 48

---